"जगत् कृत्स्नम् वासुदेवमयम्"
"परिरक्षणीय परिवेदक परमार्थ-रत्न"

# श्रीविद्यामहार्णवः
## कल्पतरुः
प्रथमो भागः
(सचित्र-सम्पूर्ण-सपर्यापद्धति-ग्रन्थः)







श्री भूमाम्बा
श्री गृहानन्दनाथलहरी

Compiled by
Anandha Shri Swami Gnananendra Saraswathi Yethi

॥श्रीगुरुभ्यो नमः॥

"परिरक्षणीय परिवेदक परमार्थरत्न"

# श्रीविद्यामहार्णवः

Volume 1

(सचित्र-सम्पूर्ण-सपर्यापद्धति ग्रन्थः)

दाक्षिणात्य-
परमहंस-परिव्राजक
अनन्त श्री ज्ञानानन्देन्द्रसरस्वतीयति-विरचितः



प्रकाशकः
श्री विद्या विमर्शन पीठम्
हनुमानघाट, वाराणसी-२२१००१
भारत




LEFT : 1. PRAKASHANANDA NATHAR (GURU)

2. AUTHOR

3. DR. VENKATESWARALU (GREAT SCHOLOR OF SRIVIDHYA)



चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहिमाम्
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्षमाम्




ஸ்ரீ காஞ்சி காமாக்ஷியம்மன் மூலஸ்தானம்

Published by
**Head Office**
**SRI VIDYA VIMARSHNA PEETTAM,**
Hanuman Ghat, Varanasi - 221 001 (U. P.)
India. Phone : 311615 pp.

**Registerd Office**

**CHENNAI**
C/o Sri Gopalakrishnan
Muvendra Colony, 22/3 Muthalamman Koil Street,
West Mambalam, Chennai - 600 033.

**HYDERABAD**
C/o Sri R. Venkatarama Ganabadigal
18/261, Mallikarjuna Nagar, Malkaajgiri,
Hyderabad - 500 047. Phone : 622833.

**BANGALORE**
C/o M. S. R. Raju
228, 1st Floor, 9th 'A' Main, 2nd Cross,
Vijayanagar, Bangalore - 560 040.



First Edition 1998.

**Laser Print Composed at :**
M/sTara Printing Works,
Kamachha, Varanasi - 221 010
Phone : 320291.

**God's Pictures Painted by**
A. Manivelu (Artist)
7/325, 2nd Road, Agastheeswara Nagar,
Pozichalur, Chennai - 600 074.

**Images Scaned at :**
Sri R. S. Bakshi and Sri Durgesh Bakshi
M/s Scantec,
16, West End Street, Gopalapuram,
Chennai - 600 086.
Phone : 8262612/ 8277743.

**Modern Art by**
M. N. Kabi
Qr No. Type III - 75, Unit 4,
Old A. G. colony Bhubaneshwar - 751 001.
Orissa. Phone : 403525.

**Printed at:**
M/s Multi Vista Global Limited,
36-A, Velachey, Chennai - 600 042.

**Cover Pages Designed by**
Ravi Gopallkrishnan
ACCEESS
9A/1 Ground Floor, Green Wood Apts,
3rd Canal Cross Street, Gandhi Nagar,
Adayar, Chennai - 600 020.
Phone : Mobile - 98410 98767

ॐ श्रीगुरुभ्योनमः

# श्री विद्यामहार्णवः

## श्री गुहानन्दनाथ लहरी कल्पतरूः

## प्रथमो भागः (इच्छा शक्तिः)

## विषयानुक्रमणिका



पं०रामघनपाठी पं०रामघनपाठी पं०रामघनपाठी पं०रामघनपाठी

डॉ० वेकटाचलम् डॉ० वेकटाचलम् डॉ० वेकटाचलम् डॉ० वेकटाचलम्

श्रीविद्यामहार्णव प्रथमो भागः विषयानुक्रमणिका समाप्तः

॥जगत्कृस्नम् वासुदेवमयम्॥

# SHRI VIDYA VIMARSHANA PEETAM

## VARANASI, CHENNAI, HYDERABAD, BANGALORE.

## "Shrividya Maharnava"

### From the Publishers pen

Indeed it is our great pleasure to introduce ourselves as the 'one and only' mission, endeavoring to spread the priceless ancient cultures and heritage of Indian origin, through one of its attributes, **"Shri Vidya"**

We are sure, you would appreciate that such rare concepts, that had stood the test of time and proven results derived in due course, lead the mankind to marvel his existence. Also, it is essential, such golden efforts of our ancestors should not be allowed to succumb to the recent cultural metamorphosis and scientific advancements, that leave only chaos and confusion.

**"Shrividya Vimashana Peetam"** is found by His Holiness Shri Shri Shri Swami Gnanandendra Saraswathiji of Varanasi, with the able guidance of intellects from various sections, qualified in different specialities. There are advisory committees to suggest and improve our activities.

Hence, **"Shrividya Vimashana Peetam"** has emerged with a great goal to protect the ancient Indian divinity and to establish the vedic and cosmic sciences through the upasakas of Shrividhya, who are spread across the country. The Government of India is kind enough to recognize our Shri Maha Meru Nithya Niranthara Pooja Trust and has exempted all the donations to this unit from income tax under rule no 80G.

Shri Maha Meru Nithya Niranthara Pooja Trust and affiliated body of **"Shrividya Vimashana Peetam"** is established to conduct niranthara Pooja to Shri Maha Meru established by Swamiji in the front of Lotus feet Goddess Annapoorana at holy town of Varanasi.

"The International Sakthas Association", is another wing of **"Shrividya Vimarshana Peetam"** aim-ing to co-ordinate the sakthas (devotees of Shakthi) and to commemorate activities at various countries, that would give peace and happiness throughout the world and bring in more values to our country.

In addition to the above regular activities, **"Shrividya Vimarshana Peetam"**, published this rare epic viz., "SHRIVIDYA MAHARNAVA". This epic would run into about 2000 pages, in three volumes that consists of rarest information on 'Shrividhya Upasana'.

**ABOUT THE COMPILER:**

The compiler of the epic is none but Shri Shri Shri Swami Gnannandendra Saraswthiji, the founder of **"Shrividya Vimashana Peetam"**. His holiness has efforted himself to visit every corner of the country to excavate all the available information about 'Shrividya'. from different sources. It would be impossible to anyone to venture to this extent as the sources were in remote and difficult to reach places. Shri Swamiji has equipped himself during the past twenty years to understand and master the levels to attain proficiency on this subject. He has spent eight years, only to compile the available data and now it is in a totally organised form, printed. His master piece effort on this epic is the transformation of about 75 vedic 'dhyna slokas' on pictorial representation, which would be the first of its kind. The pictures of devathas exactly represent the verses of the slokas, which helps the public to public to understand the purpose and benefits of such slokas. Moreover, he has only produced first time around 130 portraits of different devathas representing 'Beejaksharas', 'Athidevathas', and 'Thidhinithyas' who are helping us to reach the "Mahamaya", the ultimate for anything in the universe.

This editions of "**Shrividya Maharnava**" would serve as a ready reckoner (Sathana) and that shall educate anybody, who wants to learn about it. It is a first time ever effort to give a complete source, on a very simple style. To reap the real benefits of the epic, it is written in Sanskrit, with elaboration in Hindi, wherever it is necessary.There are 500 lining drawing helps us to reach our ultimate goal.

The three volumes of the epic, would be a great treasure to foreigners who are eager to learn Indian mythology and Hindu religion. It would be equally very useful the students of all universities and colleges, who are researching on Hinduism and vedic sciences. Hence, it would be a valid addition to all libraries, which would help all students to prepare their dissertations.

We have enormous energy to create and consolidate our efforts to bring out the epic in a most sophisticate manner. Shri Swamiji, inspite of his inabilities, he has spent all his savings that he acquired before 'sanyashrama', and many of his devotees were also participated voluntarily through their donations.

The total revenue of this book, copyright and goodwill solely is reserved by Swamiji to "Shri Vidya Vimarshana Peetam" trust by Registered Deed. Several persons have given financial assistance for publishing the epic and the peetam is highly grateful to them for their generous and timely help.

**Yours**


1. **Chief General Secretary,**
**"Shri Vidya Upasika Ratna Shri"** Vimalambal, Vimalananda Natha
alias Yoga Bala Kanchana
13, Guruyappa Street, Old Washarmanpet',
Chennai 600021. Tamil Nadu
Ph: (044) 5960622

2. **Chief General Secretary,**
Dr. Shri Rama Raju,
228, 9th Main Street, 2nd cross, Vijayanagar,
Bangalore 500040. Karnataka
Ph. Office : (080) 3312464

3. **Additional General Secretaries**
**(i)**Revati Ramchandram, M.A.
No.6 M.G. Road, Sastry Nagar, Adayar
Chennai -600020 Tamil Nadu
Ph : (044) 4918488
**(ii)**Maddi Naga Prasad, B.Com
6/1 Chandra Moul Nagar,
Guntur 522002 (Andhra Pradesh)
Ph : (0863) 224606
**(iii)** B. Sudhakar, B.E.
45/1 Ratna Vilasa Road, Basavangudi,
Bangalore 560004 Karnataka.
Ph : (080) 6614675
**(iv)** B.Ramakrishnan,
Laxmi Nilayam, 8/240, Hanuman Pet,Malkajgiri,
Hyderabad 500047. (Andhra Pradesh) Ph. (040) 622833
**(v)** M.N. Kabi.
Q.No. Type, III/1 Block A(new)
Central excise and Incometax colony,
Rajeswara Vihar, Bhubaneswar, 751004 Orrisa
Ph : (0674) 583523

ॐ

॥ ब्रह्मैव सत्यम्॥

**श्रीमत् सद्गुरु सदाशिव ब्रह्मेन्द्र सरस्वत्यवधूत स्वामिपादानां अधिष्ठानम्**

नवसालपुरी (पुदुक्कोट्टै - ६२२००१)

ॐ श्रीस्कन्दाश्रमः

सैलम् - ६३६१४०

अहो भाग्यं यत् श्रीविद्योपासकानां निधिरिव संप्राप्तः श्रीविद्यामहार्णवो नाम ग्रन्थोऽयम्। श्री श्री श्री ज्ञानानन्देन्द्र सरस्वती यतिवरैर्महता परिश्रमेण सङ्कलितं ग्रन्थमिमं दृष्ट्वा वयमतीव मोदामहे। यथा वा महार्णवे निमज्य मानवो मुक्तामणिमाहरति तथा ज्ञानानन्देन्द्र सरस्वती यतिवरः मन्त्रशास्त्राणि समालोच्य श्रीविद्यामहार्णवं प्रदत्तवान्। तदर्थं श्रीविद्योपासकाः मन्त्रप्रवीणाश्च तस्मै हार्दिकधन्यवादं निवेदयन्तीति विषये संशयो न।

ब्रह्मविद्यास्वरूपिण्या जगदम्बाया लीलाविभूतिरिव जगत्सृष्टिस्थितिलयाः। **"पञ्चकृत्य परायणा"** इत्युक्तं किल! लोकास्सर्वे तस्याः स्वरूपाः। तथापि **"ज्ञानी त्वात्मैव मे मतम्"** इतिवत् आत्मविद्यावन्तः सन्तः अम्बायाः आत्मस्वरूपाः तादृशाः यतिवराः मानवोद्धारणाय श्रीविद्यामहार्णवं प्रकाशयन्तीति यत् मातृकृपामूलमेव तत्।

ग्रन्थेऽस्मिन् श्रीविद्याक्षराणां प्रत्येक परामर्शः, **श्रीविद्या पूजापद्धतिः, मन्त्रनिरूपणं, आवरण पूजाक्रमा,** इत्यादिका अनेकांशाः निगदिताः। किञ्च **मुद्राणां यन्त्राणां चित्राणिच** तत्र तत्र ग्रन्थमलङ्कुर्वन्ति। एतादृश ज्ञानदृशां कृतयः सुकृतिभिरेव प्रतिक्षणं मन्तव्याःस्युः। एतेषां महतां यतीनां कृतिः शारदीकलेव जगत् प्रकाशिनी स्वयं स्यादिति श्रीमाता श्रीभुवनेश्वरी मोदते, अनुगृह्णाति च।

एषा श्रीविद्यामहार्णवाख्या महाकृतिरस्मिन् कलौ कलिकल्मषघ्नी, अनुपमामृतदायिनी, आचन्द्रार्कं जेजीयादिति श्रीमातरं श्रीविद्यास्वरूपिणीं श्री भुवनेश्वरीं प्रार्थयामः।

अद्वैतसिद्धान्तिनः श्रीमच्छङ्कर भगवत्पादाः सगुणोपासनाय मतानि षड्विधानि कृतवन्तः। अनेनैव कारणेन ते षण्मतस्थापका इति प्रशंसिताः। षण्मतेषु शाक्तं प्रधानतया गण्यते। अस्मद् भारतदेशे तत्र तत्र एक पञ्चाशत् शक्तिपीठाः दृश्यन्ते। तत्रत्यदेवतानां पूजनाय बीजाक्षराणि मन्त्रयन्त्रतन्त्रप्रयोगाश्च महर्षिभिः कृताः। ग्रन्थेऽस्मिन् पूर्वोक्तविषयाः संपादकैः सम्यक्प्रतिपादिताः। शाक्त सांप्रदायिकाः पूजाक्रमाश्च समीचीनतया प्रकटीक्रियन्ते। शाक्तोपासकानां दीक्षानियमाः पूजाविधानानि यन्त्र मुद्रासहितं कोशेऽस्मिन् विशदीकृतानि। गणनप्रकारा विशेषतया साधूपपादिताः आवरणसपर्याविधयश्च प्रोक्ताः। एतेन ग्रन्थस्यास्य **"श्रीविद्यामहार्णवः"** इति नाम समुचितमेव।

श्रीविद्यासम्बन्धिनो ग्रन्था बहवो वर्तन्ते। तथापि अयं श्रीविद्यामहार्णवः सारतमैः विषयतरङ्गैः शाक्तानामन्तरङ्गानाप्लावयतीति सुनिश्चितमेव।

भगवत्या ह्रीङ्कारबीजस्वरूपिण्याः श्रीभुवनेश्वर्याः परमानुग्रहेण ग्रन्थोऽयं सकलभुवन प्रार्थनाकामधेनुर्भूयादिति आशास्महे।

ईश्वरमाघशुक्लषष्ठी

इत्थम्

**श्रीमत् सद्गुरु शान्तानन्दस्वामि**

पादानामाज्ञानुकारी कार्यदर्शी

ॐ श्रीस्कन्दाश्रमः

सैलम् - ६३६१४०



श्री श्री श्री पूर्णानन्देन्द्र सरस्वती

(तुरीयाश्रम दीक्षा गुरु :)



ब्रह्म श्री बैद्यनाथसास्त्रि

(शिवानन्दनाथ)

(पञ्चदशी दीक्षा गुरु)

श्री आदि गुरुः वैद्यनाथ शर्मा - श्री मुखम् ॥

ॐ

चेन्नै

९.१.९७

क्षेम वार्ता

ब्रह्मानन्द श्री ज्ञानान्देन्द्र सरस्वती संयमिभ्यः भवद्भ्यः साकाशात् संमोदावहा पत्रिका संप्रामाः

पूज्यतमैः भवद्भिः प्रणीतं ''श्रीविद्या महार्णवगन्थं'' ज्ञात्वा अतीवाहं आनन्द अधिगच्छामि एषः पुण्यतमः ग्रन्थः श्रीविद्योपसकानां सर्वेषां उपकाराय भवेदिति निश्चिनोमि भवद्भिः अपेथितं मदीयं प्रतिनिम्न पत्रं प्रेषितं मया ।

शिवानन्दनाथः इति मदीयं दीक्षा नाम च निवेदितं ।

१. श्री राजलश्म्यमबा समेत श्री शिवानन्दनाथः ।

२. श्री मुद्दुलश्म्यम्बा समेत श्री हसितानन्दनाथः

३. श्री भागीरथ्यम्बा समेत श्री पूर्णानन्दनाथः

४. श्री संविदम्बा समेत श्री अमृतानन्दनाथः

५. श्री शिवकामसुन्दर्यम्बा समेत श्री आनन्द नटेश परशिगुरुनाथः

श्री गुरु : श्री परम गुरु : श्री परमेष्टि गुरु :

श्री परापर गुरु : श्री मुलगुरु : इति श्री गुरुपंचकं बिवरणं अपि लिखितं

गुरु पंचकपूजा सम्प्रदाय प्रादालवार्ता शून्यं - आकाशं - अम्बरं - बम्नेति वेदान्तिभिः बर्ण्यते ।

तत्र ब्रह्मणि साक्षिभूता चिन्मयी मूलप्रकृतिः पराशक्तिः शिवकामसुन्दरी बिलसति । चिदम्बरं इति क्षेत्रं अस्माकं ज्ञापयति एतत् ।

'' चिन्मया अतीता शून्यानां सून्य साक्षिणी यस्याः परतंर नास्ति सैषा दुर्गा प्रकीर्तिता ।''

उपनिषदपि बोधयति अस्माकं चिद्रूपिण्या महात्रिपुर सुन्दरी समेतः आनन्दनटेश ब्रह्म एवं अस्माकं कुटस्थ मूलगुरुदेवता इत्यापि मया भवद्भ्यः निवेद्दते

इति शं

इत्थं

भवदीयः

**क वैद्यनाथशर्मा**



श्रीमति शारदाम्बाल

(हंसाम्बा पत्नी)



ब्रह्म श्री वेदमूर्ति शास्त्रि

(हम्सानन्द नाथ)

(श्री वाराही दीक्षा गुरु)

# श्री गुरु परम्परा (दीक्षितर)

## ब्रह्म श्री हंसानन्दनाथ

ब्रह्म श्री वेंगटराम घनपाठि
(यति)

|

ब्रह्म श्री वेंगट सुब्रमण्य घनपाठि
(सोमयाजी)

|

ब्रह्म श्री यज्ञ वेंगटराम दीक्षितर

यज्ञराम दीक्षितर
(श्री रमण महरिर्षि शिष्य:)

ब्रह्म श्री जगदीश्वर शास्त्री
(शास्त्ररत्नाकर आत्मविद्याभूषण)

यज्ञनारायण दीक्षितर — नागलक्ष्मि (पत्नी)

ब्रह्म श्री वेदमूर्ति दीक्षितर
(हंसानन्दनाथ)

शारदाम्बा
(श्री गुरुपत्नी)

|

अनन्तानन्द नाथ:
(ब्रह्म श्री स्वामी शास्त्री) (गुरु)

|

ब्रह्म श्री न सुब्रह्मण्य अय्यर (परमगुरु:)
(चिदानन्द नाथ:)

श्री गुहानन्दनाथ (यति :) (परमेष्टि गुरु)



॥श्रीत्रिपुरसुन्दर्यै नमः॥

श्रीमत्परमहंस परिव्राजकाचार्य-
पदवाक्यप्रमाणपरावारपारीणानाम्
अनन्तश्रीविभूषित-
ज्योतिष्द्वारकाशारदापीठेतिशाङ्करपीठ-
द्वयाधीश्वराणां श्रीमत्स्वरूपानन्दसरस्वती स्वामिपादानाम्

---

## शुभाशीर्वादाः

**वन्दे गुरुपदद्वन्द्वमवाङ्मनसगोचरम्।**
**रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः॥**

त्रैपुरसिद्धान्तानुसारं प्रकाशविमर्शाविव सृष्टेर्मूलम्। प्रकाशः शिवः विमर्शश्च शक्तिः। मणेः प्रभा यथा न ततः पृथक् कर्तुं शक्यते तथैव शिवात् तच्छक्तिरपि नहि पार्थक्यं भजते। समस्तं विश्वप्रपञ्चमिदं प्रकाशविमर्शयोः स्पन्दनरूपम्। यथा तरङ्गं समुद्रादभिन्नं तथैव विश्वप्रपञ्चमपि परमतत्त्वादभिन्नमेव। त्रैपुरसिद्धान्तानुसारमेकस्यखण्ड सजातीय विजातीयस्वगतभेदशून्यस्य परब्रह्मणः स्वप्नजाग्रतसुषुप्तित्रयावस्थायाः साक्षिणी तुरीयापरिचितिः त्रिपुरसुन्दरी एव श्रीविद्या।

**''नैनं अविदितो देवो भुनक्ति''** इत्योक्तियुत्त्या यावदयं देवो न साक्षात्कृतो न तावत्साधकं साधु रक्षति। दृष्ट्याऽनया ब्रह्मविद्योपब्धिरेव साधकस्य कल्याणमूर्तहेतुः। महावाक्यजन्यब्रह्माकाराकारितवृत्तिमदन्तः करणोपारूढं चैतन्यमेव ब्रह्मविद्यास्वरूपम् ब्रह्मविद्याप्राप्तिमन्तरा सर्वत्र विद्यमानमपि सत् ब्रह्म तथैवाज्ञानमपाकर्तुंमनर्हो यथा सूर्यरश्मयो स्वानुकूलराशिस्था अपि सूर्यकान्तमणिसम्पर्कमन्तरा न तृणराशिं दग्धुं क्षमाः। भगवता श्रीकृष्णेन श्रीमद्भगवद्गीतायां रहस्यममं सुस्फोटितम् -

**तेषामेवानुकम्पार्थ महमज्ञानजं तमः।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥**

**श्री गणेशाय नमः**

**श्रीविद्यामहार्णवस्य भूमिका**

**यच्च किंचित्क्वचिद्वस्तु सदसद्वाखिलात्मिके ।**
**तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे मया ॥**

**उपासकोपकाराय जगन्मातुश्च तुष्टये ।**
**ज्ञानानन्देन्द्रसंयुक्तसरस्वत्यभिधैर्वरैः ॥**
**यतिभिर्निर्मितो ग्रन्थः श्रीविद्याख्यमहार्णवः ।**
**भूमिका क्रियते तस्य रामेण घनपाठिना ॥**

इह खलु विश्वमखिलं सचेतनमचेतनं सदसद्रूपं सर्वशक्तिस्वरूपिण्या आब्रह्मकीटजनन्या जगन्मातुः कृपालेशत एव स्वं स्वं कार्यं निर्वहति तदभावे ईषदपि चलितुं न शक्नोतीति न केवलं समेषामभिज्ञानां किन्त्वल्पज्ञानामपि विदितमेवेत्यत्र नास्ति संशयलेशोऽपि । मनुजा एवेति न किन्तु सृस्थितिसंहारकर्तारो ब्रह्मविष्णुमहेश्वरा अपि भगवत्याः प्रसादादेव स्वीयं कर्मजातं सम्यक्कुर्वन्तीति च । एकाऽपि महाशक्तिः **" एकं सद्विप्रा बहुधा वदन्ति"** इति त्रिविधा भवति, तत्र सर्वशक्तिस्वरूपिणी दुर्गा, सर्वसमृद्धिस्वरूपिणी लक्ष्मीः, सर्ववाक्स्वरूपा सरस्वती, इति वेदे पुराणादिषु च तथैवगीयते। विशिष्य वेदे संख्या, गुण, लिङ्ग, संबन्धादिबहुप्रकारैः सर्वत्र साम्यं निर्दिश्यते, वेदेषु यत्रैकत्वेन स्त्रीत्वेन च ईश्वरस्तुतिः तत्र पराशक्तिरेव ज्ञेया। तदुक्तं देव्यथर्वशीर्षे **"अहं ब्रह्मस्वरूपिणी। मत्तः प्रकृतिपुरुषात्मकं जगत् । सैषात्मशक्तिः"** इति अन्यत्रापि "सर्वशक्तिमयी दुर्गा" इति सर्वशक्तिस्वरूपेण दुर्गा स्तूयते। शंकरभगवत्पादैरप्युक्तं।

**"शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं**
**न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि।**
**अतस्त्वामाराध्यां हरिहरविरिंचादिभिरपि**
**प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति॥** इति

शक्तिं विना शिवोऽपि शवो भवेदिति देवीभागवते उक्तम्। **" शिवोऽपि शवतां याति कुण्डलिन्या विवर्जितः । शक्तिहीनोऽपि यः कश्चिदसमर्थः स्मृतो बुधैः"॥** सप्तशत्यामपि **" यादेवी सर्वभूतेषु शक्तिरूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः"॥** इति देवैः पराशक्तिः शक्तिरूपेण स्तुता। लोकेऽपि समर्थं शक्तत्वेनासमर्थमशक्तत्वेन च व्यवहरन्ति। **" सैषानन्दस्य मीमांसा भवति"**। इति तैत्तिरीयश्रुतिरपि **"अत्र शक्तिः चिद्रूपेणोच्यते। तथा च आनन्दस्य ब्रह्मणः-सैषा चिद्रूपा शक्तिः- मीमांसा भवति विमर्शात्मिका भवति"** इति विद्यारत्ने व्याख्याता । सर्वजगतां उत्पादकत्वादादिशक्तित्वं च। ललितासहस्त्रनामस्तोत्रेऽपि **"सर्वशक्तिमयी"** इति स्तूयते। लिङ्गपुराणेपि- **"पदार्थशक्तयो या यास्तास्ता गौरीं विदुर्बुधाः"।** इति। एवं **"परास्य शक्तिर्विविधैवश्रूयते'** इतिश्रुतिरावदति। एवं दुर्गायाः सर्वशक्तिस्वरूपपराणि वचनानि बहूनि सन्ति।

तथा सर्वसमृद्धिरूपिण्या लक्ष्म्याः प्रशस्तिरपि तैत्तिरीयब्राह्मणे ओदनसवप्रकरणे क्रियते । तत्र कल्पेऽपि **"सूर्योदयानन्तरं सिंहे व्याघ्र इति चतुर्भिरॄग्भिरोदनाच्चतस्र आहुतीर्जुहुयात्।"** तत्र मन्त्राः। **" सिंहे व्याघ्र उत या पृदाकौ। त्विषिरग्नौब्राह्मणे सूर्ये या। इन्द्रं या देवी सुभगा जजान। सा न आगन्वर्चसा संविदाना। या राजन्ये दुन्दुभावायतायाम् । अश्वस्य क्रन्द्ये पुरुषस्य मायौ। इन्द्रं या देवी सुभगा जजान। सा न आगन्वर्चसा संविदाना। या हस्तिनि द्वीपिनि या हिरण्ये। त्विषिरश्वेषु पुरुषेषु गोषु। इन्द्रं या देवी सुभगा जजान। सान आगन्वर्चसा संविदाना। रथे अक्षेषु वृषभस्य वाजे। वाते पर्जन्ये वरुणस्य शुष्मे। इन्द्रं या देवी सुभगा जजान। सान आगन्वर्चसा संविदाना"** इति। तदर्थः- सिंहे व्याघ्रे पृदाकौ मनुष्यनिगरणसमर्थेऽजगरे अग्नौ ब्राह्मणे सूर्ये च यात्विषिः अप्रधृष्यत्वलक्षणं तेजः तदभिमानिनी देवी तथा क्षत्रिये ताडयमाने दुन्दुभौ अश्वस्य हेषारवे पुरुषस्य सिंहनादादिशब्दे तथा गजे द्वीपिनि हिरण्ये अश्वेषु पुरुषेषु गोषु तथा रथे तदक्षेषु वृषस्य वेगे वायौ मेघे वरुणस्य बले च या त्विषिः देवी सौभाग्ययुक्ता सतीन्द्रं परमैश्वर्ययुक्तमुत्पादयामास। सा देवी बलेन युक्तास्मानागच्छतु। इमाश्चतस्र ऋचः याजुषश्रीसूक्तत्वेन प्रसिद्धाः। एवं महालक्ष्मीति भगवत्या एव नामान्तरमिति ललितासहस्रनामशिवपुराणादितः ज्ञायते।

एवं वाग्देव्या माहात्म्यमपि वेदे सुष्ठूक्तम् । इन्द्राद्यास्सकला देवा इन्द्रायस्वाहेत्याद्याहुतिकालीनमन्त्ररूपां वाचमेव स्वभोजनहेतुत्वेनोपजीवन्ति। तदुक्तं तैत्तिरीयब्राह्मणे - **"यस्यां देवा अदधुर्भोजनानि"** इति । तथा वाचोऽन्त एव नास्तीति महाभाष्येऽप्युक्तम् । **" बृहस्पतिश्च वक्ता। इन्द्रश्चाध्येता। दिव्यं च वर्षसहस्रमध्ययन कालः। अन्तं च न जगामेति"** तथा मनुष्या गन्धर्वादयश्च वाचैव व्यवहरन्ति। पशवोऽन्येच प्राणिनो हेषादिरुपिण्या संकेतरुपिण्या वा वाचैव व्यवहरन्ति। सर्वलोक निवासिनः प्राणिनः सर्वेऽपिवाचमेवाश्रिताः सन्ति। तथा च तैत्तिरीय ब्राह्मणे श्रूयते।- **"वाचं देवा उपजीवन्ति विश्वे। वाचं गन्धर्वाः पशवो मनुष्याः। वाचीमाविश्वाभुवनान्यर्पिता। सानो हवं जुषतामिन्द्रपत्नी"** इति। तथा वाचो ज्योतीरूपत्वं बृहदारण्यकोपनिषदि श्रूयते **"वाचैवाऽयं ज्योतिषाऽऽस्ते"** इति। वाग्रूपज्योतिरभावे सर्वं जगदन्धे तमसि प्रविष्टं स्यात् । तदुक्तं काव्यादर्शे महाकविना दण्डिना **"इदमन्धं तमःकृत्स्नं जायेत भुवनत्रयं। यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते "** इति। एवं वाग्देवी प्रणवस्वरूपा परमात्मस्वरूपिणी यज्ञस्य प्रथममुत्पादयित्री ऋग्वेदादीनां मातेति च तत्रैव श्रूयते । **" वागक्षरं प्रथमजा ऋतस्य। वेदानां मातामृतस्य नाभिः"**। इति। यां वाचं मन्त्रद्रष्टारोऽप्रतिमप्रतिभादियुक्ता ऋषयो महता प्रयासेन तपसा च प्राप्नुवन् । तथा तत्रैव श्रूयते।- **"यामृषयो मन्त्रकृतो मनीषिणः"** इत्यादि । एवम् **"चत्वारि वाक्परिमिता पदानि। तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति। तुरीयं वाचो मनुष्या वदन्ति"**। इति। वाचः परा, पश्यन्ती, मध्यमा, वैखरी, इति चत्वारि पदानि।तानि विद्वांसो ब्राह्मणा एव जानन्ति। नेतरेऽनभिज्ञाः। तत्राद्यानि त्रीणि देहमध्ये स्थापितानि भवन्ति। न बहिः प्रसरन्ति। वाचस्तुरीयं वैखर्याख्यं पदं सर्वे मनुजा वदन्ति। ललितास्तोत्रेपि **"परा प्रत्यक् चितीरूपा पश्यन्ती परदेवता। मध्यमा वैखरीरूपा"** इति स्तूयते।

एवम् दुर्गालक्ष्मीसरस्वतीरूपाया महाशक्तयाः स्तुतिर्वेदेषु पुराणादिषु चानन्ता वर्तते।

तथाऽऽचार्यप्रवरेणान्येषां बहूनां सूत्रकाराणामाचार्यभूतेन श्रौतस्मार्तप्रयोगधर्मसूत्राद्यनेकसूत्रकृता भगवता बौधायनमहामुनिनाऽपि सर्वशक्तिसर्वसमृद्धिसर्वविद्याज्ञानप्राप्तये दुर्गालक्ष्मीसरस्वतीरुद्दिश्य जपहोमादिस्पाराधनप्रकाराः पृथक्तया दुर्गालक्ष्मीसरस्वतीकल्पाभिधाः प्रणीताः एवमन्यैर्मुनिवरैरप्यनेकेषु स्मृत्यागमपुराणादिग्रन्थेषु अनेकफलोद्देशेनानेकधानेके प्रयोगाः प्रदर्शिताः।

तथा च सर्वजगदुपादानकारणभूतत्वात् मातेति च स्तूयते। मातृत्वेन प्रपंचस्य पोषणादिभिः पालयित्री जगदम्बातिरिक्ता का वा विद्यते। देवीमहात्म्येऽपि- **"यादेवी सर्वभूतेषु मातृरुपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः"**। इति शुम्भनिशुम्भपराजितवृन्दारकगणैः मातृरुपेण जगन्मातास्तुता। तथा स्तवने किं निमित्तमिति चेत् लोकेऽप्यतीव श्रान्तो नरः मातरं द्विषन्नपि विश्रान्तिकाले सर्वं विस्मृत्य हा मातः हे अम्ब इत्येव वदति। तथा मातृस्थानं सर्वश्रेष्ठं स्थानं। तथा च मनुः- **"उपाध्याया दशाचार्य आचार्याणां शतं पिता। सहस्त्रं तु पितुर्माता गौरवेणातिरिच्यते"**। इति वदति। न केवलं मनुष्याः तिर्यक्जन्तवोऽपि स्वशरीरपालनपोषणार्थं मातरमेवोपसर्पन्ति। अत एवोक्तं- **"मात्रा समं नास्ति शरीरपोषणम्"** । इति । वेदेषु शास्त्रेषु च मातुर्गौरवमनन्यादृशमुक्तम्। पृथिव्याः सर्वत्रमातृत्वेनैव स्तुतिः। तैत्तिरीयसंहितायां राजसूयप्रकरणे- **"नमो मात्रे पृथिव्यै माहं मातरं पृथिवीं ः हिं ः सिषं मा मां माता पृथिवीहिं ः सीत्"** इति मन्त्रेण पृथिव्यभिमर्शनंविहितम्। तत्र भट्टभास्कर भाष्यम् - **"नमो मात्रे इत्यस्य सर्वस्योत्पादयित्र्यैपृथिव्यै नमः। तस्य दक्षिणं पादमुपावहरति। मातरं पृथिवीमहं मा हिंसिषं। अनेन पादक्रमेण। न हि कश्चिन्मातरं हिनस्ति। पृथिवी च माता मां मा हिंसीत्। न हि कंचिदपि माता हिनस्ति ।"** इति। अत्र मन्त्रक्रमेऽपि स्वारस्यं विद्यते। सर्वत्रास्माभिः सर्वेषां प्रथमं हिंसा परिहर्तव्या। तदानीमेव वयं तैरहिंस्या भवेम। मातृविषयेप्येवमेव। इममेव न्यायमयं क्रमो बोधयति। एतन्यायाननुसरणमूलैवाधुना जगति सर्वत्र दुःखप्राप्तिर्दृश्यते। तैत्तिरीयब्राह्मणेऽपि- **"पृथिवींमातरंमहीम्"** । इति । आरण्यकेऽपि- **"भूमिर्मातादितिर्नः"** इति। तथाऽन्यासामपि देवतानां मातृत्वेनैव स्तुतिर्वेदे श्रूयते। यथा **"स्तुतो मया वरदा वेदमाता"** इति गायत्र्याः। तत्र वेदमातेत्यस्य चतुर्णां वेदानां जननीति विद्यारण्यैर्भाषितम् । तथा वाक्प्रशंसायामपि- **"वेदानां मातामृतस्यनाभिः"** । इत्यत्र **'सा चर्ग्वेदादीनां माता। तेषां वाग्विशेषरूपत्वात्'**। इति सायणभाष्यं। गोप्रशंसाऽपि **"माता रुद्राणां"** इति मातृत्वेनैव। मार्कण्डेयस्मृतावपि **"गावस्त्रैलोक्यमातरः"** इत्येव। अग्निष्टोमे दीक्षार्थस्नानेऽपि **"आपो अस्मान्मातरः शुन्धन्तु"** इति मन्त्रेऽपामपि मातृत्वेनैव स्तुतिः। तत्रभाष्यं- " आपः मातरः मातृस्थानीयाः-अस्मान् यजमानान्-शुन्धन्तु शोधयन्तु " घृतेन नो घृतपुवः पुनन्तु विश्वमस्मत्प्रवहन्तु रिप्रं" "इमाः आपः सर्वंपापमस्मत्तोऽपनयन्तु" इति। एवं मातृदेवो भवेत्यत्र भाष्यावसरे **"अथमात्रादिषु मनुष्यत्वबुद्धिपरित्यागेन देवताबुद्ध्या पूजां विधत्ते। मातैव पूजनीयः रुद्रविष्णुविनायकादिरूपः देवो यस्य सोऽयं मातृदेवः"** इति सायणाचार्यैरुक्तं। स्मृतावपि- **"पितुर्माता गरीयसी"** **"दुष्टाहि गुरवस्त्याज्या नैव माता कदाचन"**। **'न मातुर्दैवतं परम्'** इत्यादि। आयुर्वेदेऽपि **"हरीतकीं भुङ्क्ष्व राजन् मातेव हितकारिणी"**। इति हरीतक्याः निष्कारणहितकारित्वं मात्रौपम्येन दर्शितम् । नीतिशास्त्रेऽपि- 'पत्न्याः पतिविषये **'स्नेहे च माता'**। इति स्नेहे मातृसमानत्वमुक्तम् । देव्यपराधक्षमापनस्तोत्रेऽपि 'कुपुत्रो

जायेत क्वचिदपि कुमाता न भवति' इति। **" जननी जन्मभूमिश्च स्वर्गादपि गरीयसी"।** इत्यन्यत्राप्युक्तम् । तत्रापि तयोर्मध्ये मुख्यत्वं जनन्या एव। माता सर्वेषामपिपूज्यैव। नास्ति तत्र संशयलेशोऽपि। यदि कश्चिद्विरक्त्यतिशयेन पित्रोः पुरतः तुरीयाश्रमंस्वीकरोति पित्रा स वन्द्यो भवेत् परन्तु तेनैव यतिना मातावश्यंवन्द्या भवेत् । अत उक्तम्। **" सर्ववन्द्येन यतिना प्रसूर्वन्द्या निरन्तरम्"।** इति।

वेदेषु शास्त्रेषु पुराणादिषु च सर्वत्र पित्रोर्मध्ये मातुः प्राथम्यम् अभ्यर्हिततमत्वादेवेत्युक्तम् । इत्थं साधारणमातुरेवेयती प्रशस्तिश्चेद्विश्वमातुर्गौरवं मादृशैः कथं वर्णयितुं शक्यते? प्रायशः पराशक्तिः मातृत्वेन स्तूयते। शिवसहिता प्रकृतिपुरुषात्मकत्वात् शिवशक्त्यैक्यस्वरूपेण। अत एव ललितानामसाहस्रेऽपि 'श्रीमाता' इति प्रथमं नाम 'शिवशक्त्यैक्यरूपिणीति उपान्त्यम्।

एवं प्रकृतेः पुरुषाच्च समुद्भूतेऽप्यस्मिञ्जगति पित्रोर्माता यथाऽभ्यर्हितत्वेन प्रथमपूज्या एवं परमेश्वरी जगन्मातृत्वात्सर्वैरप्यग्रपूज्या। यत्र प्रकृतिपुरुषात्मकत्वेन मातापितृत्वेन युग्मत्वेन शिवशक्त्यात्मकत्वेन वा स्तुतिः तत्रउमाशंकराविति गम्यते। यथाश्वमेधे- **" विभूर्मात्राप्रभूः पित्रेत्याह। इयं वै माता। असौपिता"।** इति। तत्र इयं शब्देन पृथिवी असौ शब्देन द्यौरुच्यते। न केवलं वेदेष्वेव अन्यत्राप्ययमेव नियमः। अत एव महाकविकुलचूडामणिः कालिदासोऽपि -**"वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये। जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ"** इति शब्दार्थाविव नित्यसमवेतौ प्रपंचस्य मातापितरौ पार्वतीपरमेश्वरौ प्रणम्य स्वीयं काव्यं रघुवंशमारभते। अत्र केचित् " पार्वतीप,रमेश्वरौ, इति विभज्य शिवं विष्णुं च इति अर्थं व्याचक्षते। परन्तु नैतत्कालिदासस्याभिमतं स्यात् । कुतः? शब्दार्थाविवेत्यनुक्त्वा वागर्थाविवेत्युक्तत्वाद्वागर्थशब्दयोरेकः स्त्रीलिंगः। अपरः पुल्लिंगः । उपमा कालिदासस्येति वचनात् वागर्थाविवेत्युपमास्वारस्यान्नमस्कार्य देवतयोर्मध्य एकस्यास्त्रीत्वं अपरस्याः पुंस्त्वम् वागर्थाविव नित्यसमवेतत्वादभेदश्च प्रतीयते। तच्च शिवं विष्णुं चेति व्याख्याने न संगच्छते। उभयोःपुंरुपत्वात् । **" अर्धोवा एष आत्मनोयत्पत्नी"** इति श्रुत्या च पतिपत्न्योरेवाभेदोऽपि। अपि च पितामात्रेतिसूत्रेण पितरावित्यत्र माता च पिता च पितरावित्येकशेषः। आराध्यकोटौ मातुरग्रगण्यत्वात् पार्वतीतिजगन्माता परमेश्वरेति जगत्पितेत्येव विवक्षितम्। न तु पितृद्वयं विवक्षितम् । वायुपुराणसंहितायामपि शब्दार्थयोः पार्वतीपरमेश्वरस्वरूपत्वमुक्तम् ।**" शब्दजातमशेषं तु धत्तेशर्वस्य वल्लभा। अर्थरूपं यदखिलं धत्ते मुग्धेन्दुशेखरः"** इति । नित्यपूजायामपि **"नमश्शिवाभ्यां"** इति उभयोर्मिलितयोरेव नमस्कारः। अनयोरेवादिदेवदम्पत्योरर्द्धनारीश्वरस्वरूपत्वं। नान्यदेवदम्पत्योः। एवं यज्ञादिष्वपि प्रायः दीक्षा, उपसत् , सुत्या, वेदिः, महावेदिः, चितिः, स्रुक्, इड़ा, औदुम्बरी, इष्टकाः, समिधः, ऋचः, आहुतयः, दक्षिणाः, पत्नी,उखा, वसोर्धारा, इत्याद्याः स्त्रीलिङ्गनिर्दिष्टाः अंगकलापाः शक्तिरूपेण तथा पुल्लिङ्गे निर्दिष्टाः यज्ञः, यजमानः, अग्निः, पशुः, सुतः, सोमः, दर्भः, वेदः, गार्हपत्यः, दक्षिणाग्निः, आहवनीयः, पुरोड़ाशः, कालः, देशः, ब्राह्मणः, ऋत्विक्, मन्त्रः, यूपः, ग्रहः, प्रवर्ग्यः, इत्याद्यङ्गकलापाः शिवरूपेण चोक्ताः। तथा च **" शिवायाहवनीयाय शक्त्यै वेद्यै नमोनमः"** एवमादि शिवशक्तिस्वरूपपराणि बहूनि वचनानि सन्ति। तथा महाग्निचयनेऽपि स्वयमातृण्णासृष्टिव्युष्टिप्रभृतीनामिष्टकानां पराशक्तिरूपेणैव ध्यानम् । व्युष्ट्यादीनां जगदुत्पत्तिनिदानत्वेन

श्रूयमाणत्वात्पृथिव्यादिरूपेणस्तवनाच्च तद्रूपेण पराशक्त्यतिरिक्ता का वा भवितुमर्हति? एवं सहस्त्र, द्विसहस्त्र,त्रिसहस्त्र, संख्याकाभिरिष्टिकाभिः समन्त्रकं यथाविध्युपहिताहवनीयासनभूतोऽग्नी रुद्रत्वेनैव श्रूयते। अत्र अग्निशब्देनेष्टकानिर्मितश्यैनाद्याकारकचितिविशेष उच्यते। तथा च श्रुतिः- " **रुद्रोवा एष यदग्निः**" इति।

अत्रोपधीयमानेष्टकानां मध्ये व्युष्ट्याख्यानां वेदेऽतीव प्रशंसितत्वात् ताः सायणभाष्यानुसारेण किंचिद्विविच्यन्ते। तथाचापस्तम्बसूत्रं " **इयमेव सा या प्रथमाव्यौच्छदिति षोड़शव्युष्टीः**" इति। तत्र किं तावद्व्युष्टित्वमिति चेत् प्रथमसृष्टिकाले कालानामादिभूतोयः प्रभातकालः तद्रूपत्वम् । तत्र प्रथमा सृष्टिकालीना। द्वितीया प्रतिदिनसंचारिणी। तृतीयां व्युष्टिमाग्नि, सूर्य, चन्द्र,रूपास्त्रयो देवास्समवयन्ति। एकैवोषादेवी भुवनसंरक्षणार्थं योगैश्वर्याद्यनेकदेहस्वीकाराद्बह्वी भवति। तत्रैका यजमानस्य प्रजां रक्षति। अपराबलं। अन्या कर्मानुष्ठानं। एवं चतुर्थी उषास्त्रिवृत् ,पञ्चदश, सप्तदश, एकविंशाख्य स्तोत्रसंख्यारूपचतुष्टोमयुक्ताग्निष्टोमसंस्थाकज्योतिष्टोमयज्ञस्वरूपाभवत् । पञ्चमी तु "**पञ्चभिर्धाता विदधाविदं**" इति यदिदं जगत्तत्सर्वं ब्रह्मा पंचभिरुषोदेवीभिः सृष्टवान्। तासां पंचोषसां प्रत्येकं पंच पंच स्वसृरजनयत् । एवं च ज्येष्ठाः पंचोषसः। तासां स्वसारः पंचविंशतिसंख्याका इत्येकस्मिन्मासि प्रतिपदादितिथिरुपास्त्रिंशदुषसो भवन्ति। तासां मध्ये ज्येष्ठानां पंचानामुषसां मुख्यतया क्रतुनिष्पादकत्वम् । तत्रैका दैनन्दिनमग्निहोत्रं निष्पादयति। अपरे द्वे दर्शपूर्णमासौ। औपवसथ्यदिनकृत्यमेका सुत्यादिनकृत्यमेकेत्येवं क्रत्वन्तरभेदनिष्पादकत्वेन नानारुपाः। षष्ठी तु त्रिंशन्मासतिथिरूपिणी सूर्यं परियन्ती वसन्तादीनृतूत्संपादयति। सप्तमी ज्योतीरुपत्वात् ज्योतिष्मतीत्युच्यते। अष्टमी एकाष्टकाख्या तपसेन्द्रमुत्पाद्य तद्वारा राक्षसान्नाशितवती। सामान्यतः जगति देवस्य पत्नीं शक्तिरुपेणैव व्यवहरन्ति। " **हन्तासुराणामभवच्छचीभिः।**" इति। अत्र सायण भाष्यं "**सचेन्द्रः शचीभिः स्वकीयशक्तिभिः-असुराणां हन्ताभवत्।**" नवमी अनुष्ठानरहितं मामनुष्ठानोपेतं कृतवती। दशमी तु अस्मदनुग्रहेस्थैर्यं व्याप्तवती। अथैकादशी। मुख्याः पंचोषसः पञ्चव्युष्टयइत्युच्यन्ते। ता अनु पंचात्मकं सर्वमिदमुत्पन्नं किमिति चेदुच्यते। तमिस्त्रा ज्योत्स्ना संध्याद्वयमहरित्येते पंचदोहाः। ब्राह्मणेऽपि "**एतेवै प्रजापतेर्दोहाः**"इति। गां पृथिवीं पञ्चविधनामोपेतां-तद्यथा वसन्तेषु पुष्पवत्याख्या, ग्रीष्मे तापवती, वर्षासु वृष्टिमती, शरदि जलप्रसादवती, हेमन्तशिशिरयोः शैत्यवती। एषा पृथिवी पञ्चनाम्नी व्युष्टीरनूत्पन्ना। एवं वसन्तो,ग्रीष्मो,वर्षाः, शरत् , हेमन्तशिशिराविति पञ्चर्तवो व्युष्टीरनूत्पन्नाः। तथा प्राची, दक्षिणा, प्रतीची, उदीची, ऊर्ध्वा, चेति पञ्च दिशः व्युष्टीरनूत्पन्नाः। एवं पञ्चदशस्तोमकल्पा पञ्चस्तोत्रियाः पञ्चव्युष्टीरनूत्पन्नाः। इममेव विषयं मन्त्रोऽयं प्रकाशयति। " **पञ्च व्युष्टीरनु पंचदोहा गां पंचनाम्नीमृतवोऽनु पञ्च। पञ्चदिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरभिलोकमेकम्** ।" इति। अथ द्वादशी। पञ्चोषसां मध्ये या प्रथमा सा सदा सूर्येण सहैव वर्तते। अन्याजलमाहात्म्यं बिभर्ति। अन्या घर्मकालीनरश्मिद्वारा मेघे जलमानयति। अन्या सूर्ये, अन्याग्नौ च प्रकाशं कुर्वत्यौस्तः । अथ त्रयोदशी । या प्रथमोषाः तमोनिराकरणद्वारा समस्तजगतां प्रकाशप्रदानेन धेनुवत्प्रीतिकर्यासीत्। अथ चतुर्दशी। ज्योतिषां मध्ये श्रेष्ठेयं सूर्येण अन्धकारनिवारणरूपसमानप्रयोजनवतीष्टका। अथ पंचदशी। इयं प्रथमोषा वसन्ताद्यृतूनां पालयित्री,

अह्नां नेत्री, प्रजानामुत्पादयित्री च । तथा चोषःकालस्यासकृदावृत्या ऋतवस्संपद्यन्ते। जगतां प्रकाशी भवति। गर्भधारणादिना प्रजोत्पद्यते। इयं स्वरूपेणैकापि दिनभेदेन बहुप्रकारा भूत्वा तमो निष्कासयन्ती वलीपलितादिजरारहिता सर्वाणि मनुष्यादिशरीराणि जीर्णानिकरोति। एवमस्मिन्ननुवाके पञ्चदशर्चः। प्रथमकाण्डे चतुर्थप्रश्ने चतुस्त्रिंशानुवाकस्था षोड़श्यृक् **"इयुष्टेये"** इति। ये मनुष्या उषोदेवतां प्रभातंकुर्वतीमन्येभ्यः पूर्वां पश्यन्ति ते तां देवतां प्राप्नुवन्ति। इति षोड़श व्युष्टयः। एवंपराशक्तिरूपिण्या महाग्निचयनेष्टकान्यतमभूत व्युष्ट्यभिधेष्टकामहत्त्वेयतीत्युक्ते भगवत्याः संपूर्णा महत्ता कथमस्माभिरल्पमेधोभिर्वर्णयितुं शक्यते?

तथा च चयने सर्वासामिष्टकानामुपहित्यनन्तरं इष्टका धेनुत्वेन यजमानः प्रार्थयते। **" इमा मे अग्नइष्टका धेनवः सन्त्वित्याह धेनूरेवैनाः कुरुते ता एनं कामदुघा अमुत्रामुष्मिंल्लोक उपतिष्ठन्ते।"** इति ब्राह्मणम् । तथा - **" इमामे अग्न इष्टका धेनवः सन्त्वितीष्टका धेनूर्यजमानः कुरुते इत्यापस्तम्बश्रौतसूत्रम्। एवं वेदेषु, मन्त्रे, ब्राह्मणे, कल्पसूत्रेषु, भाष्ये, च पराशक्तिरूपेष्टकानां तद्रूपकामधेनुत्वेन प्रशंसा कृताऽस्ति। ललितास्तोत्रेऽपि पराम्बा "गोमाता"** इति गोमातृरूपेण वर्णिता। गोमातेत्यस्य गवां माता सुरभिः तद्रूपा इति सौभाग्यभास्करे उक्तम्। तथा वर्णनस्येदं तात्पर्यं गावस्त्रैलोक्यमातृत्वेन परदेवतास्वरूपत्वेन जगदुपादानकारणत्वेन च शास्त्रेषु श्रुताः। तथा गोदानमन्त्रोऽपि **"गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश"** इति। एवं ब्राह्मणोऽपि **"वेदाध्यायी सदाशिवः"** इति रुद्रस्वरूपतयोक्तः। अतएव सर्वसंप्रदायावलम्बिभिरपि पुराणादिष्वन्ते **"गोब्राह्मणेभ्यः शुभमस्तु नित्यं"** इति प्रथमं प्रकृतिपुरुषात्मकानां गोब्राह्मणानां कृते शुभं संप्रार्थ्य, ततः **'लोकाः समस्ताः सुखिनो भवन्तु'** इति प्रार्थ्यते। गोब्राह्मणानां लोकान्तर्भूतत्वेऽपि विशिष्य तेषां शुभप्रार्थनायां प्रथमं कृतायामन्येषां सर्वेषां लोकानां स्वत एव सौख्यं भवेदिति प्रत्ययः। तथापुण्याहादिषु कर्ममध्येऽपि **'गोब्राह्मणेभ्यः शुभं भवतु'**। इति प्रार्थ्यते। अतएव कर्मणि यत् किंचिदपि ज्ञातमज्ञातं वा न्यूनत्वमाधिक्यं तस्य सर्वस्य परिहारार्थं साद्गुण्यार्थं च गोभ्यो ग्रासदानं ब्राह्मणेभ्यो भोजन-दक्षिणाप्रदानं च शास्त्रेषूक्तम् । तथा च **" गोभ्यो ग्रासप्रदानेन ब्राह्मणेभ्योऽन्नदानतः। दक्षिणादानतः सर्वं तत्कर्म सफलं भवेत्।"** इति। सूत्रकारैरपि कर्मसु **" ब्राह्मणान् भोजयित्वाशिषोवाचयित्वा"** इत्युक्तम् । एवं गोब्राह्मणाः शक्तिशिवस्वरूपेण स्तुताः। एवमत्रापि शक्तिरूपेणष्टकाः संप्रार्थ्य संचितमग्निं शिवस्वरूपेण उपस्थेयं च श्रुतिर्वदति। तथाहि-**"यत्ते रुद्र पुरो धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र संवत्सरेण नमस्करोमि, यत्ते रुद्र दक्षिणा धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र परिवत्सरेण नमस्करोमि, यत्ते रुद्र पश्चाद्धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्रेदावत्सरेण नमस्करोमि, यत्ते रुद्रोत्तराद्धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्रेदुवत्सरेण नमस्करोमि,यत्ते रुद्रोपरिधनुस्तद्वातो अन वातु ते तस्मै ते रुद्र वत्सरेण नमस्करोमि रुद्रो वा एष यदग्निस्स यथा व्याघ्रः क्रुद्धस्तिष्ठत्येवंवा एष एतर्हि संचितमेतैरुपतिष्ठते नमस्कारैरेवैनं शमयति"** इति। सूत्रकारैरपि **"यत्ते रुद्र पुरो धनुरित्येतैर्यथालिङ्गमुपतिष्ठते"** इत्युक्तम् । सायणभाष्येऽपि हे रुद्र! पूर्व, दक्षिण, पश्चिम, उत्तर, ऊर्ध्वा, ख्यासु पंचसु दिक्षु तव धनुषे प्रभवादिषष्टिसंवत्सराणां मध्ये एकैकस्मिन्पंचकस्थितैः संवत्सर, परिवत्सर, इदावत्सर, इदुवत्सर, वत्सरैःकालैः प्रतिसंवत्सरं नमस्करोमि।

इति। एवं रुद्ररुपीऽयमग्निरेभिर्मन्त्रैरुपस्थाने कृते तद्गतनमस्कारैश्शान्तो भवति। तस्यां गरुडपक्ष्याकारकचित्यामग्निं यथाविधि प्रतिष्ठाप्य तस्मिन्नेवाग्नौ रुद्राध्यायेनाजक्षीरं हुत्वा चमकमन्त्रैर्वसोर्धारां च हुत्वा सर्वान्कामानवाप्नोति। इति। अनेन महाग्नेरपि शक्तिशिवस्वरूपत्वं ज्ञायते। सप्तशत्यामपि जगति विद्यमानं सर्वमपि चैतन्यं देवीमयमित्युक्तम् । **"या देवी सर्वभूतेषु चेतनेत्यभिधीयते। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः।"** इति। अश्वमेधेऽपि प्रथमं देवी पूज्यते। **"हयमेधाग्रसंपूज्यमहिमायै नमो नमः।"** इति ललिताष्टोत्तरशतनामस्तोत्राज्ज्ञायते। ज्योतिश्शास्त्रेऽपि तिथि, वार, नक्षत्र, योग, करणानां पंचांगानां मध्ये मुख्यभूता तिथिः। तां श्रीविद्यापूजायां प्रथमं संपूज्य ततोऽन्यासां देवतानां पूजनम् । अद्यावधि प्रायः सर्वेऽपि साधकाः पराम्बाकृपालेशत एव सिद्धिं प्राप्ता इत्यत्र न संशयः। एवं अनन्तमहिमाया महिमवर्णनं सान्तं विधाय शान्तो भवामि।

अस्तु,इदानीं प्रकृतमनुसरामि। श्रीविद्यादितन्त्रोत्पत्तिः कथमितिचेदुच्यते। भारतीयानां समेषामस्माकं बहुधा भिन्नानां धर्माणां, संप्रदायानामाचाराणां, संस्कृतीनां, च मूलं वेद एवेत्यत्र सर्वेषां स्मृत्यादिकर्तॄणामृषीणां विश्वप्रसिद्धानामाधुनिकानां विदुषां चैषदप्यभिप्रायभेदो नास्ति। तत्र धर्मप्रमाणविषये मनुः- **" वेदोऽखिलोधर्ममूलं स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूनामात्मनस्तुष्टिरेव च"** । इति । सर्वोऽपि धर्मो वेदादेवोद्भूतोऽतएव धर्मप्रमाणविषये वेदस्य प्राथम्यं मनुनोक्तं। यत्र प्रत्यक्षो वेदो नोपलभ्यते तत्र तद्विदां वेदार्थविदां स्मृतिः धर्मशास्त्रेतिहासपुराणादीनि तथा शीलं सद्भिस्सम्भावनीयताहेतुरात्मगुणसंपत् , धार्मिकाणामाचारः शौचाचमनादिक्रियाविशेषः आत्मतुष्टिश्च, मनसोरुचिश्च, इमानि धर्मप्रमाणत्वेनोक्तानि। तथापि धर्मादिविषयेऽपौरुषेयत्वाद्वेदः स्वतन्त्रं प्रमाणम्। स्मृत्यादीनि वेदमूलकतया। यद्यपीदानीं धर्ममूलभूतो वेदोऽखिलोऽस्माभिर्न लभ्यते चेदपि मन्वादिस्मृतिकर्तॄणामुपलब्ध इत्यत्र न संशयः। तथाचापस्तम्बः **" तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते"** इति। कालिदासोऽपि रघुवंशे **"श्रुतेरिवार्थं स्मृतिरन्वगच्छत्"**। इति। श्रुतिः स्मृतिः सदाचारः क्रमाद्धर्मादिप्रमाणानि। तत्र श्रुतिस्सर्वापेक्षया प्रबलं प्रमाणम्। तदलाभे स्मृतिस्तदलाभे सदाचारः। तथा स्मृतिसंग्रहेऽपि - **" श्रुतिस्मृतिपुराणेषु विरुद्धेषु परस्परम्। पूर्वं पूर्वं बलीयस्स्यादितिन्यायविदो विदुः"** इति। तदुक्तं वसिष्ठस्मृतौ- **" श्रुतिस्मृतिविहितो धर्मस्तदलाभे शिष्टाचारः प्रमाणम्।"** इति। वेदः, श्रुतिः, निगम, इत्यनर्थान्तरम् । जगत्यां सर्वेऽपि प्राणिनो दुःखनिरसनपूर्वकसुखप्राप्तिमेवेहन्ते। अत एव धर्मार्थकाममोक्षाणां पुरुषैरर्थ्यमानत्वात्पुरुषार्थता। पुरुषार्थप्राप्त्यर्थमेव वेदेषु यज्ञादिरूपेणानेक उपायाः श्रुताः। ततः **" स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा"**। इति भागवतोक्तप्रकारेण वेदानधिकृतस्त्रीशूद्रद्विजबन्धूनां कृते आगमतन्त्रपुराणान्युत्पन्नानि। तत्रागमाश्शैवावैष्णवाश्च पांचरात्रादिभेदेन बहुविधाशिवविष्णुकर्तृकाः । तन्त्राणितु महामाया, शम्बर, बहुरूपभैरव, यामल, कौल, गारुडाघोरादीनि चतुष्षष्टिसंख्याकानीति श्रूयन्ते। **" एवमेतानि शास्त्राणि तथान्यान्यपिकोटिशः। भवतोक्तानि मे देव"** इति वचनाच्छिवप्रोक्तानि तन्त्राणीति ज्ञायते। कूर्मपुराणेऽपि- **" एवं संचोदितो रुद्रो माधवेन मुरारिणा। चकार मोहशास्त्राणि केशवोऽपि शिवेरितः। कापालकाकुलं वामं भैरवं पूर्वपश्चिमम्। पांचरात्रं च कौलं च तथान्यानि सहस्रशः"** इति। मोहनायैवतन्त्रस्य प्रवर्तितत्वं कौर्मे शिवः स्वयं वदति। **" अन्यानि चैव शास्त्राणि लोकेऽस्मिन्मोहनाय, वै । वेदवादविरुद्धानि मयैव, कथितानि तु। वामं पाशुपतं, घोरं**

**लांगुलं चैव भैरवम् । न सेव्यमेतत्कथितं वेदबाह्यं तथेतरत्''** इति। एवं **''स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा''। इति भारतमाख्यानं कृपयामुनिनाकृतं।** इति भागवत उक्तम् । इत्थं भारतं तथाष्टादश पुराणानि स्त्रीशूद्रादीनां कृते भगवता व्यासेन कृतानि। बहव आगमतन्त्रनामश्रवणमात्रेण तानि वेदबाह्यानीतिमन्यन्ते। तथा तु नास्ति । नहि सर्व आगमास्सर्वाणि च तन्त्राणि वेदबाह्यानीतिवा वेदाविरुद्धानीति वा वक्तुं शक्यन्ते । कानिचन वेदविरुद्धानि कानिचनाविरुद्धानि कानिचन स्वतन्त्राणीति तन्त्राणि त्रिधा भिद्यन्त एव। तत्र वेदविरुद्धानि चार्वाक, जैन, बौद्ध, शाक्य, निर्ग्रन्थादीनि **''विरोधे त्वनपेक्षं स्यादसतिह्यनुमानं'' ''हेतुदर्शनाच्च''** इति जैमिनिसूत्रद्वयं व्याकुर्वद्भिर्भट्टपादैस्तथाब्रह्मसूत्रे भगवता व्यासेन तद्भाष्ये च श्रीशंकरभगवत्पादैरप्यवैदिकानीतिसाधितानि। वेदाविरुद्धानि च बहुरूप, यामल, विष्णु, श्रीविद्या, तन्त्रप्रभृतीनि । स्वतंत्राणि च योगसांख्यपाञ्चरात्रादीनि।

एतेषां ग्राह्याग्राह्यत्वविचारो वैदिकत्वावैदिकत्वेनैव। यतो ब्राह्मणस्य वेदाध्ययनमेव सर्वप्रधानम् ''ब्राह्मणेन निष्कारणेन षडङ्गोवेदोऽध्येयोज्ञेयः'' इत्युक्तत्वात् । वेदाध्ययनमेव तप इति वेद एवोक्तं **''तपोहि स्वाध्यायः''** इति । मनुरपि **''वेदाभ्यासो हि विप्रस्य परमं तप उच्यते''** इति। कूर्मपुराणेऽपि-**''योऽन्यत्र कुरुते यत्नमनधीत्य श्रुतिं द्विजः। स वै मूढो न संभाष्यो वेदबाह्यो द्विजातिभिः''**। वेदाध्ययनहीनस्यसर्वकर्मानिर्हत्वमप्युक्तम्**''वेदाध्ययनहीनो यस्सोऽनर्हस्सर्वकर्मसु''**। इति **''वेदाद्धर्मो हि निर्बभौ''**। इत्यतो ब्राह्मणस्य वैदिको धर्मो मुख्यस्स्वधर्मश्च। उक्तं च गीतायां- **''स्वधर्मे निधनं श्रेयः परधर्मो भयावहः''** इति। शंकरभगवत्पादैरपि **''शिवः शक्त्या युक्त''** इति शक्तिपारम्यं प्रतिपादयद्भिः **''वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां । तेनेशस्य विधीयतामपचितिः''** इति वेदस्य नित्याध्येयत्वं, तदुक्तकर्मणां सुष्ठ्वनुष्ठेयत्वं, तेनैवेश्वरस्य पूजनं चोक्तं।गर्गोऽपि- **''प्रधानं वैदिकं कर्म गुणभूतं तथेतरत्। गुणनिष्ठः प्रधानन्तु हित्वा गच्छत्यधोगतिम्''**इति।बोधायनोऽपि-**''न च नित्यानि लोपयेत् ''** इति। तस्माद्ब्राह्मणस्य स्वधर्मं वेदाध्ययनतदुक्तकर्मानुष्ठानादिरूपं संत्यज्य तन्त्रोक्तधर्मानुष्ठान एव दोषः। तमपरित्यज्य वेदानुवर्तिश्रीविद्यादिशक्त्युपासनाप्रतिपादकतन्त्रानुसरणे न कोऽपि दोषः। अपि च **''शिष्टाचारविरुद्धं यच्छास्त्रं बह्वपि सन्त्यजेत्।''** इति शिष्टाचारविरुद्धधर्मादीनामेवाग्राह्यत्वम्। श्रीविद्यादितन्त्रोक्तपराशक्त्युपासना-पद्धतिक्रमस्य परमशिष्टैस्सकलविद्यापारदृश्वभिर्वेदोक्तनिखिलसत्कर्मानुष्ठिति-तत्परैश्शक्त्युपासकशिरोमणिभिः श्रीभास्कररायमखिश्रीमुत्तुस्वामिदीक्षितप्रभृतिभिर्महद्भिः परिगृहीतत्वाद्वेदाविरुद्धत्वाच्च तत्परिग्रहे न कोऽपि दोषः। बहवस्सज्जना अपि श्रीविद्यातन्त्रोक्तशक्तिपूजेत्युक्ते मद्यमांसादियुक्ता वेदशिष्टाचारविरुद्धेत्येव भ्राम्यन्ति। सौत्रामणीयज्ञे सुराग्रहस्य **''सौत्रामण्यां सुराग्रहः''**। इति कलावेव निषेधो न तु युगान्तरे। **''न मद्यं ब्राह्मणो दद्यान्महादेव्यै कदाचन। मद्यं दत्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते''**। इतिशास्त्रोक्त्या ब्राह्मणेन देवीपूजायां मद्यादीनां प्रदानस्य तु सर्वदा निषिद्धत्वं सर्वशिष्टसंमतम् । धर्मशास्त्रेषु तु मद्याभिमर्शनाघ्राणादयोऽपि जातिभ्रंशकरादिपातकत्वेन परिगणिताः। तत्प्रायश्चित्तानि च विस्तरेणोक्तानि। **''न सुरांपिबेत् ''** इति सुरापाननिषेधविषये सर्वासां श्रुतिस्मृतीनां, सर्वेषां स्मृत्यादिकर्तृणामृषीणां चेषदपि मतभेदो नास्ति। आपस्तम्बेनापि **''सर्वं मद्यमपेयं''** इति सर्वविधमद्यपानस्यापि निषेधः कृतः । एवं शास्त्रनिषिद्धत्वेन स्वस्यानुपयुक्तस्य वस्तुनः प्रदानस्य तत्राप्याराध्यदेवतायै

प्रदानस्य कथैव नास्ति। अतः सद्गुरुसंप्रदायागतश्रीविद्यापूजादिपद्धतिक्रमे त्वेतादृशश्रुतिस्मृति-सदाचारविरुद्धाचाराणामभावेन तस्य सर्वशिष्टसंमतत्वे नास्ति संशयलेशोऽपि।

श्रीविद्यातन्त्रं त्वन्यतन्त्रापेक्षया सुलभं वैदिकमनेकशिष्टपरिगृहीतं यमनियमाद्यष्टाङ्गयोग-युक्तप्रयोगरमणीयं पुरुषार्थचतुष्टयप्रदं सर्वेषां तन्त्राणां शिखरमिव चकास्ति। अत्र पूर्वाचार्यैः स्वसंप्रदायानुसारं भगवत्या आराधनक्रमः सम्यङ्निरूपितः । दक्षिणदेशेऽपि बहवश्शिष्टाः स्वगुरुपरंपराप्राप्तक्रमानुसारं जगदम्बिकामर्चयन्त इदानीमपि सन्ति। अत्रायमेको विशेषो यच्चित्तवृत्तिनिरोधरूपयोगेन, निष्कामकर्मानुष्ठानेन, कुण्डलिन्याः षट्चक्रभेदनद्वारा सहस्रारे ध्यानेन, सदा **" सर्वं देवीमयं जगत् ।"** इति भावनया चान्यत्र सुदुर्लभा जीवन्मुक्तिस्सुलभा भवति। अतः परं किमपेक्षितं जीवस्य।

एतादृशावर्णनीयानन्तमहिमयुतश्रीविद्याराधनक्रमसंबन्धिविषयान्कलिप्रभावाद्विलुप्तप्रायांस्तत्र तत्र विशकलितान् संप्रदायं, शिष्टाचारं चानुसृत्य पूर्वाचार्यकृतेभ्यः परशुरामकल्पसूत्र, नित्याषोडशिकार्णवादिपरश्शत-ग्रन्थेभ्यस्संकलय्य श्रीविद्योपासकानां जिज्ञासूनां च परमोपकारायाष्टवर्षमहोरात्रपरिश्रमेणायं श्रीविद्यामहार्णवाभिधो ग्रन्थो निबद्धः श्रीज्ञानानन्देन्द्रसरस्वतीयतिवरैः। यतिवरेण्याएते पूर्वं गृहीतकावेरीतीरगृहस्थाश्रमवासास्संप्रति गृहीतगांगतीरतुरीयाश्रमवासाः पराम्बिकारूपगङ्गाकावेर्यादिमहानदा-संसर्गात्तद्रूपश्रीविद्याभिधं ब्रह्म ध्यायन्तो विराजन्ते। श्लो. **"ज्ञानानन्दमयं ब्रह्म ज्ञानानन्देन्द्रसंयमी । ज्ञानानन्दार्थमेवास्ते ध्यायन्गङ्गातटेऽनिशम्।"** इमे सप्ताष्टभ्योवत्सरेभ्यः प्राग्यदा ग्रन्थस्यास्य संकलनमारब्धवन्तस्तदा महतो ग्रन्थस्यास्य संकलनं कथं संपादयिष्यन्तीति मे विश्वास एव नासीत् । **"अनारम्भो मनुष्याणां प्रथमं बुद्धिलक्षणं। आरब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम्।"** इत्युक्तरीत्या सर्वेषामेव कार्याणामनारंभ आरब्धस्यान्तगमनंचेति द्विविधं बुद्धिलक्षणं मतिमद्भिरंगीक्रियते। जगति प्रायशः कार्यारम्भदक्षा बहव उपलभ्यन्ते। नतु कार्यावसानचतुराः। एवं **"प्रारभ्यते न खलु विघ्नभयेन नीचैः प्रारभ्य विघ्नविहता विरमन्ति मध्याः। विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारब्धमुत्तमजना न परित्यजन्ति।।"** इति भर्तृहरिणोक्तप्रकारेणैते साधका बहुतरविघ्नैरसकृद्विहता अपि **"कः ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत् ।"** इति कालिदासोक्त्यनुसारमीप्सितार्थरूपश्रीविद्यामहार्णवग्रन्थदर्शनमन्तरा न विरेमुः। इमेऽस्य महतो ग्रन्थस्य निर्माणविषये भगवतीकृपामात्रसहायाः शोधनादिकार्येषु रात्रिन्दिवं संलग्ना महता प्रयासेन स्वीयमुद्यमं सफलमकुर्वन् । अहो महतीयं साधनैतेषाम्।

एतत्कृतो निबन्धोऽयमप्यपूर्वाणां विषयाणां, मुद्राणां, चित्राणां, चाकरभूतो महारत्नानां महार्णव इव श्रीविद्यामहार्णवेत्यन्वर्थसंज्ञां लभते। पूर्वमपि निबन्धानाममूल्यानामपूर्वविषयाणां महार्णवेत्येवाख्या पूर्वैः कृतासीत् । न केवलं ग्रन्थ एवान्वर्थाभिधः। किन्तु भागप्रकरणादयोऽपि तथाभूताः। ग्रन्थस्यास्य श्रीविद्यापूजाप्रकाशकत्वात् ध्यानध्यातृध्येयस्वरूपिणीति ललितासहस्रनामोक्तेश्च श्रीविद्यायां पूजा, पूज्य, पूजकानां मध्ये भेदाभावाच्च भगवतीस्वरूपत्वं नियतम् । त्रिधाच विभक्तोऽयं ग्रन्थः।

भगवत्यास्त्रितयवस्तुरूपत्वं वेदादिषु सर्वत्र गीयते। ललितासहस्रनामस्तोत्रेऽपि

त्रिपुरेतिनामव्याख्यानावसरे भास्कररायमखिभिः कालिकापुराणोक्तिः प्रदर्शिता। तथा च **"सर्वं त्रयं त्रयं यस्मात्तस्मात्तु त्रिपुरा मता।"** इति। तथा **' देवानां त्रितयं त्रयी हुतभुजां शक्तित्रयं त्रिस्वरा त्रैलोक्यं त्रिपुरी त्रिपुष्करमथ त्रिब्रह्म वर्णास्त्रयः। यत्किंचिज्जगति त्रिधा नियमितं वस्तु त्रिवर्गात्मकं तत्सर्वं त्रिपुरेति नाम भगवत्यन्वेति ते तत्वतः।"** इति। एवं त्रिस्थेति नामव्याख्यावसरे मार्कण्डेयपुराणोक्तिरपि- **"त्रयी लोकास्त्रयी देवास्त्रैविद्यं पावकत्रयं। त्रीणि ज्योतींषि वर्गाश्च त्रयो धर्मादयस्तथा। त्रयो गुणास्त्रयः शब्दास्त्रयो दोषास्तथाश्रमाः। त्रयः कालास्तथावस्थाः पितरोहर्निशादयः । मात्रात्रयं च ते रूपं त्रिस्थे देवि सरस्वति"** इति। एवमन्यान्यपि त्रितयवस्तूनि शास्त्रेषूक्तानि। तथा च तिस्त्रोव्याहृतयः, त्रीणि कर्माणि, त्रीणि छन्दांसि, त्रीणि सवनानि, त्रयः प्राणाः, इत्यादीनि। तत्र देवत्रयं ब्रह्मविष्णुशिवात्मकं। त्रयी ऋग्यजुसामानि। अग्नित्रयं गार्हपत्यदक्षिणाग्न्याहवनीयाः। शक्तित्रयं इच्छशक्तिज्ञानशक्तिक्रियाशक्तयः। त्रिस्वराः उदात्तानुदात्तस्वरिताः। त्रैलोक्यं पृथिव्यन्तरिक्षस्वर्गलोकाः। त्रिनाडयः सुषुम्नापिंगलेडाः। त्रयो वर्णाः ब्राह्मण,क्षत्रिय,वैश्याः। यद्वा सित,रक्त,कृष्ण,वर्णाः। त्रीणि ज्योतींषि अग्निवाय्वादित्याः। त्रयो वर्गाः धर्मार्थकामाः। त्रयो गुणाः सत्वरजस्तमोरूपाः। त्रयः शब्दाः परापश्यन्तीमध्यमाख्याः। त्रयोदोषाः वातपित्तकफात्मकाः। त्रयः कालाः भूतवर्तमानभविष्यदाख्याः। अवस्थात्रयं बाल्ययौवनवार्धकानि। त्रयः पितरः पितृपितामप्रपितामहाः। अहस्त्रयं पूर्वमध्यापराह्णरूपं। तिस्त्रो व्याहृतयः भूर्भुवस्सुवराख्याः । त्रीणि कर्माणि सृष्टिस्थितिसंहाराः। त्रीणि छंदासि गायत्रीत्रिष्टुबजगतीरूपाणि। सवनत्रयं प्रातस्सवनमाध्यन्दिनतृतीयसवनाख्यं। त्रयः प्राणाः प्राणापानव्यानाः । एवं त्रितयात्मकानामनेकानां पदार्थानां देवीस्वरूपत्वाद्भागत्रयस्यापि इच्छाशक्ति, ज्ञानशक्ति, क्रियाशक्ति, इति नामकरणं संगच्छते। किंचैतद्भागत्रयस्य देवलोकीयकल्पतरु,कामधेनु, चिन्तामणिरितिरत्नत्रयनामानि तथा श्रीगुहानन्द-लहरी, श्रीचिदानन्द-लहरी, श्रीप्रकाशाम्बा-लहरी,ति ग्रन्थकर्तुः परमेष्ठिगुरु, परमगुरु, स्वगुरु, नामानि च स्थापितानि । एवमेकस्यैव भागस्य त्रीणि त्रीणि नामानि **"त्रीणि त्रीणि वै देवानामृद्धानि।"** इति श्रुत्युक्त प्रकारेण कृतानि। यथा वा पराशक्तिस्त्रिगुणादिस्वरूपत्वात्त्रिपुरेति कथ्यते। यथा वा द्वादशमासैस्संवत्सररूपा, यथा वा द्वादशभिस्तोत्रैर्यज्ञरूपैवमयं श्रीविद्यामहार्णवग्रन्थोऽपीच्छाशक्त्यादिभागत्रयालंकृतो दीक्षादिद्वादशप्रकरणैर्भूषितः श्रीविद्यास्वरूप एव शोभते। अत्र प्रतिप्रकरणं द्वादशमुद्राश्चित्रप्रमाणसहिताः कृत्वाहत्य चतुश्चत्वारिंशदुत्तरशतसंख्याका उपस्थापिताः। तन्त्रशास्त्रेषूक्तं मुद्राणां माहात्म्यं वर्णयितुमेवाशक्यम् । मुद्राणां प्रदर्शनमात्रेणैव वस्तूनि दोषपापादिविमुक्तानि विशुद्धानिच भवन्तीति शास्त्रमर्यादा। तथा च **" मुद्रा तु मोदयेद्देवीं द्रावयेद्दुरितं तथा।"** इति। एवं पञ्चाशन्मातृकावर्णदेवतानामपि स्वरूपाणि ध्यानाद्यर्थं सप्रमाणं चित्ररूपेण सज्जीकृतानि सन्ति। एतावत्पर्यन्तं मुद्रामातृकाक्षरचित्राणि न केनापि प्रकाशीकृतानि।

अनिर्वर्णनीयो हि मातृकाक्षरमहिमा। सामान्यतो मातृकावर्णज्ञानस्यैव ब्रह्मलोकप्राप्तिपर्यन्तं महत्फलं लक्षणशास्त्रेषूक्तम् । किमुतमातृकावर्णसिद्धेः। तथा च तैत्तिरीयप्रातिशाख्ये- **" पदक्रमविशेषज्ञो वर्णक्रमविचक्षणः। स्वरमात्राविभागज्ञो गच्छेदाचार्यसंसदम्। "** इति। पदस्य लक्षणं- **"अन्तगं पदं"**- अवसानसहितो वेदभागः पदसंज्ञः स्यात् । यथा - इषे- त्वा-ऊर्जे-त्वा इत्यादि। एवं क्रमस्य लक्षणं

च **" संहितावत्क्रमौ ज्ञेयौ द्वितीयं पदवद्धयोः। इतिगं त्वादि चेदुक्त्वा द्वितीयं चोत्तरं तथा।"** इति। यत्र द्वयोः पदयोः संहितेवेच्चारणं क्रियते, द्वितीयं पदं पदवत् पदावसान इव यथा भवेत्, तथा योऽध्याय उच्यते स क्रमसंज्ञः स्यात्। यथा - इषेत्वा- त्वोर्जे-ऊर्जेत्वा-त्वावायवः- इत्यादि। तयोरादिपदं इतिगं-इङ्ग्यं- प्रगृह्यं वा यदि स्यात् तदितिसहितमुक्त्वा द्वितीयं पदं तदुत्तरपदं च पूर्ववदुच्येते स क्रमः। एवं पदस्य क्रमस्य च विशेषं जानातीति **" पदक्रमविशेषज्ञः"** वर्णानां क्रमे विचक्षणः निपुणः । तथाचोक्तं व्यासशिक्षायां- **" "ध्वनिस्स्थानं च करणं प्रयत्नः कालता स्वराः। देवता जातिरेतैश्च वर्णा ज्ञेया विचक्षणैः।"** इति। तत्र ध्वनिः नादादिध्वनयः । स्थानं कण्ठादिस्थानं। करणं जिह्वामूलादीनि। प्रयत्नः स्पृष्टादयः। कालता अण्वर्धमात्रादिकालाः। स्वराः उदात्तादयः। देवता वाय्वादयः। जातिः ब्राह्मणादयः । एतैश्च एभिर्धर्मैर्वर्णा विज्ञेया निपुणैः इति व्यासशिक्षायामुक्तम् । शिक्षान्तरेऽपि- **" केवलस्वरसंयुक्तो मात्रिकासहितस्तथा। अङ्गं च वर्णसारं च पंच वर्णक्रमाः स्मृताः।"** इति पञ्चधा वर्णक्रमा उक्ताः। एषु सर्वेषु समर्थः एवं स्वरा उदात्तादयः। मात्रा अण्वादिकालाः। तासां विभागं जानातीति स्वरमात्राविभागज्ञः। तादृशः वेदवित्तमः आचार्याणां व्यासादीनां- संसदं स्थानं ब्रह्मलोकं गच्छेत् । इत्ययं तैत्तिरीयप्रातिशाख्यस्यान्तिमः श्लोकः । व्यासशिक्षायां अपि- **" संहितापाठमात्रेण यत्फलं प्रोच्यते बुधैः। पदे तु द्विगुणं प्रोक्तं क्रमे तु च चतुर्गुणम् । वर्णक्रमे शतगुणं जटायां तु सहस्रकम् ।"** इति। **"लक्षणज्ञस्तदाप्नोति ब्रह्मज्ञानं हि शाश्वतम् ।"** इति वर्णक्रमज्ञानतदुच्चारणस्य महत्फलमुक्तम् । इयं वर्णक्रमोच्चारणपद्धतिः दक्षिणभारते तमिलनाडुप्रान्त एवावशिष्टा । अतः **" देवी"** इति पराम्बावाचकस्य वैदिकस्य शब्दस्य पंचधा वर्णक्रमोक्तिप्रकारः सर्वेषां सुखावगमार्थं प्रदर्श्यते। तत्रादौ शुद्धवर्णक्रमः। **"देवी"**दकार, सव्यञ्जन एकार, वकार, ईकाराः। द्वितीयः स्वरवर्णक्रमः। तस्यैव देवीत्यस्य। **"देवी"** दकारानुदात्तसव्यञ्जनएकार, वकारोदात्तईकाराः । तस्यैव तृतीयो मात्रावर्णक्रमः **"देवी"** अर्धमात्रिक दकार, द्विमात्रिकानुदात्तसव्यञ्जन एकार, अणुमात्रिकविराम, अर्धमात्रिक वकार, द्विमात्रिकोदात्तईकार, द्विमात्रिकविरामाः। तस्यैव तुरीयोऽङ्गवर्णक्रमः **"देवी"** अर्धमात्रिकपरांगभूत दकार, द्विमात्रिकानुदात्त सव्यञ्जन एकार, अणुमात्रिक विराम, अर्धमात्रिक परांगभूत वकार, द्विमात्रिककोदात्त ईकार, द्विमात्रिकविरामाः । अथ तस्यैव पंचमो वर्णसारभूतवर्णक्रमः **"देवी"** संवृतकण्ठोत्थितसंवारघोषाल्पप्राणाख्यबाह्यप्रयत्नसहितनादध्वनिजनित उत्तरदन्तमूलाधोभागस्थान जिह्वाग्रकरणस्पृष्टप्रयत्नार्धमात्रिकपरांगभूत, भूमिदेवताकक्षत्रियजातिदकार,संवृतकण्ठोत्थितसंवाराख्यबाह्य प्रयत्नसहितनादध्वनिजनित,उपसंहततरहनुसहिततालुस्थानेषत्सन्निकृष्टोष्ठ सहितजिह्वामध्यकरणविवृतप्रयत्न-द्विमात्रिक,अग्निदेवताकक्षत्रियजातितमोगुणसहित कनिष्ठिकांगुल्याधारेस्वान्यासयोग्य शरीरह्रासैधितगळबिलविनिःसृतमृदुध्वनिकशिखिरुततुल्यषड्जस्वरहेतुभूत हृदयस्थानोत्पन्नदीर्घानुदात्तस्वरगुणक वायुदेवताकब्राह्मणजाति सव्यञ्जन एकार, अणुमात्रिक विराम, संवृतकण्ठोत्थितसंवारघोषाल्प-प्राणाख्यबाह्यप्रयत्नसहितनादध्वनिजनित, उत्तरदन्तमूलाग्रस्थानान्तरोष्ठान्तकरण ईषत्स्पृष्ट प्रयत्नार्धमात्रिक परांगभूत , चन्द्रदेवताक वैश्यजाति वकार, संवृतकण्ठोत्थितसंवाराख्यबाह्यप्रयत्न सहितनादध्वनिजनित तालुस्थानात्युपसंहृतकल्पोष्ठसहितजिह्वामध्यकरणविवृतप्रयत्नद्विमात्रिक, भूमिदेवताकब्राह्मणजातिसत्वगुण-

**ॐ श्रीं ह्रीं ऐं ॐ नमः** मूर्ध्नि
**ॐ श्रीं ह्रीं ऐं न नमः** भाले
**ॐ श्रीं ह्रीं ऐं मों नमः** दक्षनेत्रे
**ॐ श्रीं ह्रीं ऐं मं नमः** वामनेत्रे
**ॐ श्रीं ह्रीं ऐं गं नमः** दक्ष श्रोत्रे
**ॐ श्रीं ह्रीं ऐं वं नमः** वाम श्रोत्रे
**ॐ श्रीं ह्रीं ऐं तें नमः** दक्ष गण्डे
**ॐ श्रीं ह्रीं ऐं दं नमः** वाम गण्डे
**ॐ श्रीं ह्रीं ऐं क्षिं नमः** दक्षनासापुटे
**ॐ श्रीं ह्रीं ऐं णां नमः** वामनासापुटे
**ॐ श्रीं ह्रीं ऐं मूं नमः** आस्ये
**ॐ श्रीं ह्रीं ऐं तँ नमः** दक्षभुजे
**ॐ श्रीं ह्रीं ऐं यें नमः** वामभुजे
**ॐ श्रीं ह्रीं ऐं मं नमः** दक्षकक्षे
**ॐ श्रीं ह्रीं ऐं ह्यं नमः** वामकक्षे
**ॐ श्रीं ह्रीं ऐं में नमः** गळे
**ॐ श्रीं ह्रीं ऐं घां नमः** दक्षस्तने
**ॐ श्रीं ह्रीं ऐं प्रं नमः** वामस्तने
**ॐ श्रीं ह्रीं ऐं ज्ञां नमः** हृदये
**ॐ श्रीं ह्रीं ऐं प्रं नमः** नाभौ
**ॐ श्रीं ह्रीं ऐं यं नमः** कट्यां
**ॐ श्रीं ह्रीं ऐं छं नमः** गुह्ये
**ॐ श्रीं ह्रीं ऐं स्वां नमः** दक्षपादे

## अष्टमूर्त्ति न्यासः

**ॐ श्रीं ह्रीं ऐं लं भवाय क्षिति मूर्तये नमः** मूलाधारे
**ॐ श्रीं ह्रीं ऐं वं शर्वाय, जलमूर्तये नमः** स्वाधिष्ठाने
**ॐ श्रीं ह्रीं ऐं रं ईशानाय तेजोमूर्तये नमः** मणिपूरके
**ॐ श्रीं ह्रीं ऐं यं पशुपतये, वायुमूर्तये नमः** अनाहते
**ॐ श्रीं ह्रीं ऐं हं रुद्राय, आकाशमूर्तये नमः** विशुद्धौ
**ॐ श्रीं ह्रीं ऐं ह्रां उग्राय, सूर्यमूर्तये नमः** दक्षनेत्रे
**ॐ श्रीं ह्रीं ऐं सं भीमाय, सोम मूर्तये नमः -** वामनेत्रे
**ॐ श्रीं ह्रीं ऐं आं महते, आत्म मूर्तये नमः -** भ्रूमध्ये

ततः आज्ञा चक्रस्य एकैकाङ्गुलोपरि देशे—

**ॐ श्रीं ह्रीं ऐं अकारात्मक क्रिया शक्ति सहित सद्योजातमूर्तये नमः -** बिन्दौ
**ॐ श्रीं ह्रीं ऐं उकारात्मक ज्ञान शक्ति सहित वामदेव मूर्तये नमः -** अर्धचन्द्रे
**ॐ श्रीं ह्रीं ऐं महारात्मक इच्छा शक्ति सहित अघोरमूर्तये नमः -** रोधिन्यां
**ॐ श्रीं ह्रीं ऐं बिन्द्वात्मक आनन्द शक्ति सहित तत्पुरुषमूर्तये नमः -** नादे
**ॐ श्रीं ह्रीं ऐं नादात्मिक चिच्छक्ति सहित ईशान मूर्तये नमः -** नादान्ते
**ॐ श्रीं ह्रीं ऐं सत्स्वरूप विद्याशक्ति सहित आत्ममूर्तये नमः -** शक्तौ

**ॐ श्रीं ह्रीं ऐं चित्स्वरूप विद्या शक्ति सहित अन्तरात्ममूर्तये नमः** - व्यापिकाचां

**ॐ श्रीं ह्रीं ऐं आनन्द रूप विद्या सहित परमात्ममूर्तये नमः** - समनायां

**ॐ श्रीं ह्रीं ऐं आकारात्मक सच्चिदानन्द स्वरूप परा शक्ति ज्ञानमूर्तये नमः** उन्मन्यां

**ॐ श्रीं ह्रीं ऐं (मूलं) विवेक वृत्यवच्छिन्न चिच्छक्ति सहित निर्विशेष ब्रह्मत्मक श्री गुरु मूर्तये नमः** - ब्रह्मरन्ध्रे

## *चरणन्यासः*

**ॐ श्रीं ह्रीं ऐं अं हंसः। रक्त चरणाय नमः।** मूलाधारे

**ॐ श्रीं ह्रीं ऐं उं सोहं। शुक्ल चरणाय नमः।** अनाहते

**ॐ श्रीं ह्रीं ऐं मं हंसः सोहं। मिश्रचरणाय नमः।** आज्ञायां

**ॐ श्रीं ह्रीं ऐं ओं हंसः सोहं हंसः। निर्वाण चरणाय नमः** - ब्रह्मरन्ध्रे

इति न्यासान् कृत्वा, पात्राणि साधयित्वा - अथ छाट पूजाः पश्चिमं धर्मछारः।

१ **ॐ श्रीं ह्रीं ऐं हा सद्योजात प्रतिष्ठाकलात्मक धर्म छाराय नमः।** इति पुष्पाञ्जलिः।

**ॐ श्रीं ह्रीं ऐं रमा श्री पादुकांपूजयामि नमः। नारायण श्रीपादुकां पूजयामि नमः धर्मस्य देवता श्री महाविष्णु श्री पादुका पूजयामि नमः**

२ **दक्षिणं अर्थद्वारः।**

**ॐ श्रीं ह्रीं ऐं हूँ अधोर विद्या कलात्मक अर्थद्वाराय नमः।** इति पुष्पाञ्जलिः **उमा श्री पादुकां पूजयामि नमः। महेश्वर श्री पादुकां पूजयामि नमः** अर्थद्वारस्य देवता **श्री महाविष्णु श्री पादुकां पूजयामि नमः**

३ **पूर्वं कामद्वारः।**

**ॐ श्रीं ह्रीं ऐं हैं तत्पुरुष शक्ति कलात्मक कामद्वाराय नमः** - पुष्पाञ्जलिः **रति श्री पादुकां पूजयामि नमः। कन्दर्प श्री पादुकां पूजयामि नमः।** कामस्य देवता **भवानी श्री पादुकां पूजयामि नमः**

४ **उत्तरं मोक्षद्वारः।**

**हीं। वामदेव निवृत्ति कलात्मक मोक्षद्वाराय नमः।** पुष्पाञ्जलिः **मही श्री पादुकां पूजयामि नमः। वराह श्री पादुकां पूजयामि नमः।** मोक्षस्य देवता **सूर्यः श्री पादुकां पूजयामि नमः।**

५ मध्यम प्राकारस्यद्वारः **(उर्ध्वद्वारः) उर्ध्व परमाद्वैतद्वार हौं। ईशान शान्त्यतीत कलात्मक अद्वैत द्वाराय नमः।।**

पुष्पाञ्जलिः।। **सिद्धलक्ष्मी श्री पादुकां पूजयामि नमः। महागणपति श्री पादुकां पूजयामि नमः। परमाद्वैतस्य द्वारस्य देवता श्री महागणपति श्री पादुकां पूजयामि नमः।।**

### श्रीमेघादक्षिणामूर्ति-मन्त्रः

अस्य श्री मेघादक्षिणामूर्तिमहामन्त्रस्य शुकब्रह्म ऋषिः।

गायत्री छन्दः। मेधादक्षिणामूर्तिर्देवता। मेधा बीजं। प्रज्ञा

शक्तिः स्वाहा कीलकम्।। मेधा-दक्षिणामूर्तिप्रसाद सिद्ध्यर्थे जपे विनियोगः।

ॐ नमः। भगवते। दक्षिणामूर्तये। मह्ये मेधां प्रज्ञां। प्रयच्छ स्वाहा।। इति करन्यासः।। अङ्गन्यासश्च।। भूर्भुवस्सुवरोमिति दिग्बन्धः।। ध्यानम्।

भस्मव्यापाण्डुरांगः शशिशकलधरो ज्ञानमुद्राक्षमालावीणापुस्तैर्विराजत् करकमलधरो योगपट्टाभिरामः।

व्यारव्या-पीठे निषण्णो मुनिवरनिकरैः सेव्यमानः प्रसन्नः सव्यालः कृत्तिवासाः संततमवतु नो दक्षिणामूर्तिरीशः।।

स्फटिक रजतवर्णं मौक्तिकी अक्षमालां अमृतकल विशाज्ञानमुद्राः कराग्रैः। दधत मुरगकक्षं चन्द्रचूडं त्रिनेत्रं विधृत विविध भूषन् दक्षिणामूर्त्तिमीडे।।

लं इत्यादि पंचपूजा।।

मन्त्रः।। ॐ नमो भगवते दक्षिणामूर्तये मह्यं मेधां प्रज्ञां प्रयच्छ स्वाहा।।

हृदयादिन्यासः। भूर्भुवस्सुवरोमिति दिग्विमोकः। ध्यानम्।।

लं इत्यादि पंचपूजा।। समर्पणम्।।

## *श्री दक्षिणामूर्ति आवरणपूजा*

### प्रथमावरणम्

ध्यानम् - आवाहनम् एवं षोडषोपचारपूजनं कुर्यात्

ॐ ऐं ह्रीं श्रीं ॐ नमो भगवते दक्षिणामूर्तये

मह्यं मेधां प्रज्ञां प्रयच्छ स्वाहा — (इतिमूले न त्रिस्सन्तर्पय)

१. ॐ ऐं ह्रीं श्रीं अं चिन्तामणि श्रीपादुकां पूजयामि नमः।

२. ॐ ऐं ह्रीं श्रीं उं कल्पवृक्ष श्रीपादुकां पूजयामि नमः।

३. ॐ ऐं ह्रीं श्रीं मं कामधेनु श्रीपादुकां पूजयामि नमः।

पुनः मूलेन त्रिः यजेत्।

धूप-दीप-नैवेद्य-ताम्बूल आदि समर्पयेत्

ॐ ऐं ह्रीं श्रीं अभीष्ट सिद्धि मे देव शरणागत वत्सल।

भक्तया समर्पये तुभ्यं प्रथमावरणार्चनम

## द्वितीयावरणम्

षट्कोणे ऊध्वादि

१. ॐ ऐं ह्रीं श्रीं ॐ नमो भगवते हृदयाय नमः हृदय शक्ति श्रीपादुकां पूजयामि नमः।

२. ॐ ऐं ह्रीं श्रीं दक्षिणामूर्तये शिरसे स्वाहा शिरश्शक्ति श्रीपादुकां पूजयामि नमः।

३. ॐ ऐं ह्रीं श्रीं मह्यं शिखायै वषट् शिखा शक्ति श्रीपादुकां पूजयामि नमः।

४. ॐ ऐं ह्रीं श्रीं मेधां प्रज्ञां कवचाय हुँ कवच शक्ति श्रीपादुकां पूजयामि नमः।

५. ॐ ऐं ह्रीं श्रीं प्रयच्छ नेत्रत्रयाय वौषट् नेत्रशक्ति श्रीपादुकां पूजयामि नमः।

६. ॐ ऐं ह्रीं श्रीं स्वाहा अस्त्राय फट् अस्त्रशक्ति श्रीपादुकां पूजयामि नमः।

मूलेन त्रिस्तर्प्य धूपं दीपं नै वेद्यं ताम्बूलं च सर्पयेत्

ॐ ऐं ह्रीं श्रीं अभीष्टसिद्धि मे देव शरणागत वत्सल भक्तया समर्पये तुभ्यं द्वितीयावरार्णचनम्। ध्यान-आवहन-षोशोपचार पूजा कुर्यात्

## तृतीयावरणम्

(दश अष्टदलम्)

१. ॐ ऐं ह्रीं श्रीं सनकः श्रीपादुकां पूजयामि नमः।

२. ॐ ऐं ह्रीं श्रीं भृगुः श्रीपादुकां पूजयामि नमः।

३. ॐ ऐं ह्रीं श्रीं सनन्दनः श्रीपादुकां पूजयामि नमः।

४. ॐ ऐं ह्रीं श्रीं वसिष्टः श्रीपादुकां पूजयामि नमः।

५. ॐ ऐं ह्रीं श्रीं अत्रिः श्रीपादुकां पूजयामि नमः।

६. ॐ ऐं ह्रीं श्रीं सनातनः श्रीपादुकां पूजयामि नमः।

७. ॐ ऐं ह्रीं श्रीं भरद्वाजः श्रीपादुकां पूजयामि नमः।

८. ॐ ऐं ह्रीं श्रीं सनत्कुमारः श्रीपादुकां पूजयामि नमः।

९. ॐ ऐं ह्रीं श्रीं नारदः श्रीपादुकां पूजयामि नमः।

१०. ॐ ऐं ह्रीं श्रीं ऋभुः श्रीपादुकां पूजयामि नमः।

मूलेन त्रिः यजेत्

धूपं दीपं नैवेद्यं ताम्बूलं च समर्पयेत् ॐ ऐं ह्रीं श्री अभीष्ट सिद्धिं मे देव शरणागत वत्सल भक्तया समर्पये तुभ्यं तृतीयावरणार्चनम्।

## तुरीयावरणम्

(अष्टकोणे ऊर्ध्वादि कोणाग्रेषु)

ध्यान-आवाहन-षोडशोपचार पूजां कुर्यात्

१. ॐ ऐं ह्रीं श्रीं लं भवाय क्षिति मूर्ति श्रीपादुकां पूजयामि नमः।

२. ॐ ऐं ह्रीं श्रीं वं शर्वाय जल मूर्त्ति श्रीपादुकां पूजयामि नमः।

३. ॐ ऐं ह्रीं श्रीं रं ईशानाय अग्नि मूर्ति श्रीपादुकां पूजयामि नमः।

४. ॐ ऐं ह्रीं श्रीं यं पशुपतये वायु मूर्ति श्रीपादुकां पूजयामि नमः।

५. ॐ ऐं ह्रीं श्रीं हं रुद्राय आकाश मूर्ति श्रीपादुकां पूजयामि नमः।

६. ॐ ऐं ह्रीं श्रीं ह्रां उग्राय सूर्य मूर्ति श्रीपादुकां पूजयामि नमः।

७. ॐ ऐं ह्रीं श्रीं सं भीमाय सोम मूर्ति श्रीपादुकां पूजयामि नमः।

८. ॐ ऐं ह्रीं श्रीं आं महते आत्म मूर्ति श्रीपादुकां पूजयामि नमः।

९. ॐ ऐं ह्रीं श्रीं अं आं ब्राह्मी असिताङ्ग भैरव श्रीपादुकां पूजयामि नमः।

१०. ॐ ऐं ह्रीं श्रीं इं ईं माहेश्वरी काल भैरव श्रीपादुकां पूजयामि नमः।

११. ॐ ऐं ह्रीं श्रीं उं ऊं कौमारी चण्ड भैरव श्रीपादुकां पूजयामि नमः।

१२. ॐ ऐं ह्रीं श्रीं वैष्णवी क्रोध भैरव श्रीपादुकां पूजयामि नमः।

१३. ॐ ऐं ह्रीं श्रीं लृं लॄं वाराही उन्मत्त भैरव श्रीपादुकां पूजयामि नमः।

१४. ॐ ऐं ह्रीं श्रीं एं ऐं इन्द्राणी कपाल भैरव श्रीपादुकां पूजयामि नमः।

१५. ॐ ऐं ह्रीं श्रीं ओं औं चामुण्डा भीषण भैरव श्रीपादुकां पूजयामि नमः।

१६. ॐ ऐं ह्रीं श्रीं अं अः भहालक्ष्मी संहार भैरव श्रीपादुकां पूजयामि नमः।

मूलेन त्रिः यजेत्

धूप-दीप-नैवेद्य ताम्बूलम् च समर्पयेत् ॐ ऐं ह्रीं श्रीं अभीष्ट सिद्धिं मे देव शरणागत वत्सल भक्तत्या समर्पये तुभ्यं तुरीयावर्णाचनम्।

## पञ्चमावरणम् (A)

ध्यान आवाहन-षोडशोपचार पूजनं कुर्यात्

A. १. ॐ ऐं ह्रीं श्रीं अं अणिमा श्रीपादुकां पूजयामि नमः।

२. ॐ ऐं ह्रीं श्रीं मं महिमा श्रीपादुकां पूजयामि नमः।

३. ॐ ऐं ह्रीं श्रीं गं गरिमा श्रीपादुकां पूजयामि नमः।

४. ॐ ऐं ह्रीं श्रीं लं लधिमा श्रीपादुकां पूजयामि नमः।

५. ॐ ऐं ह्रीं श्रीं पं प्राप्ति श्रीपादुकां पूजयामि नमः।

६. ॐ ऐं ह्रीं श्रीं प्रं प्राकाम्य श्रीपादुकां पूजयामि नमः।

७. ॐ ऐं ह्रीं श्रीं ईं ईशित्व श्रीपादुकां पूजयामि नमः।

८. ॐ ऐं ह्रीं श्रीं वं वशित्व श्रीपादुकां पूजयामि नमः।

इति द्वितीयारे स्वात्मक भूगृहस्य अन्दराळे स्वाग्रादि प्रादक्षिण्येन यजेत्।

## पञ्चमावरण B. (पूर्वादि दिक्षु)

B. १. ॐ ऐं ह्रीं श्रीं इन्द्र श्रीपादुकां पूजयामि नमः।

२. ॐ ऐं ह्रीं श्रीं अग्नि श्रीपादुकां पूजयामि नमः।

३. ॐ ऐं ह्रीं श्रीं यम श्रीपादुकां पूजयामि नमः।

४. ॐ ऐं ह्रीं श्रीं निर्ऋति श्रीपादुकां पूजयामि नमः।

५. ॐ ऐं ह्रीं श्रीं वं वरुण श्रीपादुकां पूजयामि नमः।

६. ॐ ऐं ह्रीं श्रीं यं वायु श्रीपादुकां पूजयामि नमः।

७. ॐ ऐं ह्रीं श्रीं सं सोम श्रीपादुकां पूजयामि नमः।

८. ॐ ऐं ह्रीं श्रीं हं ईशान श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं मूलेन त्रिः यजेत् ततः दक्षिणामूर्तये धूपं दीपं नैवेद्यादि षोडशोपचारैः संपूज्य।

ॐ ऐं ह्रीं श्रीं अभीष्ट सिद्धिं मे देव चरणागत वत्सल भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम्।

इति दक्षिणामूर्त्ति आवरणम् समाप्तः

# ७. श्रीगुरुमण्डलार्चन-खण्ड:

## *श्रीविद्यापरम्परा-श्रीगुरुमण्डलार्चनम्*

### श्रीगुरुमण्डलार्चनम्




| | | | | | |
|---|---|---|---|---|---|
| A. बिन्दु: | ० | I. ३२ सिद्धगण: | ५९-९० | P. व्यासपंचकम् | १२९-१३३ |
| B. परौघम् | १-१२ | J. चिरञ्जीवीगण: | ९१-९८ | Q. शुकाचार्य: | १३४-१३९ |
| C. दिव्यौघ- | | K. स्कन्दपंचकम् | ९९-१०४ | R. आचार्यपंचकम् | १४०-१४६ |
| D.E. सिद्धौघ-मानवौघम् | १३-३१ | L. नन्दीपंचकम् | १०५-११० | S. कल्पाचार्यगण: | १४७-१४९ |
| F. मन्त्रद्रष्टा: | ३२-४७ | M. नारायणपंचकम् | १११-११६ | T. स्तोत्राचार्यगण: | १५०-१५२ |
| G. सनकादिका: | ४८-५१ | N. भक्तपंचकम् | ११७-१२२ | U. उपासकपंचकम् | १५३-१५९ |
| H. सप्तर्षिगण: | ५२-५८ | O. वसिष्ठपंचकम् | १२३-१२८ | W. स्वगुरुपंचकम् | १६०-१६५ |



श्री गुरुमण्डल पूजा मण्डपः

## *श्री गुरुमण्डलार्चनम्*

(प्रथमतः महापादुकां—षडन्वय शाम्भवी—दक्षिणामूर्ति आवरणम्—गुरूमण्डलम—इति क्रमेण यजेत्।।)

१. ॐ ऐं ह्रीं श्रीं ऐं कएइलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं हंसः शिव सोहं *निर्वाण चरण* श्रीपादुकां पूजयामि नमः।

२. ॐ ऐं ह्रीं श्रीं ऐं कएइलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं हंसः शिवस्सोहम् *निवार्ण चरणाम्बा* श्रीपादुकां पूजयामि नमः।

३. ॐ ऐं ह्रीं श्रीं ऐं कएईलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं हंसः शिव सोहम् रक्त चरण श्रीपादुकां पूजयामि नमः।

४. ॐ ऐं ह्रीं श्रीं ऐं कएईलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं हंसः शिव सोहं रक्त*चरणाम्बा* श्रीपादुकां पूजयामि नमः।

५. ॐ ऐं ह्रीं श्रीं ऐं कएईलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं हंसः शिव सोहं *शुक्ल चरण* श्रीपादुकां पूजयामि नमः।

६. ॐ ऐं ह्रीं श्रीं ऐं कएइलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं हंसः शिव सोहं *शुक्लचरणाम्बा* श्रीपादुकां पूजयामि नमः।

७. ॐ ऐं ह्रीं श्रीं ऐं कएइलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं हंसः शिव सोहं *मिश्र चरण* श्रीपादुकां पूजयामि नमः।

८. ॐ ऐं ह्रीं श्रीं ऐं कएइलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं हंसः शिव सोहं *मिश्र चरणाम्बा* श्रीपादुकां पूजयामि नमः।

ततः त्रिकोणे स्ववामकोणेदिशि प्रादक्षिण्येन *श्रीविद्यापरम्परां यजेत्*। तत्र उड्डीशादि प्रियानन्द नाथान्तं कृत्वा—पूजयेत्।।




A बिन्दुः आदिनाथदक्षिणामूर्त्तिः
काम-कामेश्वरः

## B त्रिकोणे परौघम्

१. ॐ ऐं ह्रीं श्रीं उड्डीशानन्दनाथ श्रीपादुकां पूजयामि नमः।

२. ॐ ऐं ह्रीं श्रीं प्रकाशानन्दनाथ श्रीपादुकां पूजयामि नमः।

३. ॐ ऐं ह्रीं श्रीं विमर्शानन्दनाथ श्रीपादुकां पूजयामि नमः।

४. ॐ ऐं ह्रीं श्रीं आनन्दानन्दनाथ श्रीपादुकां पूजयामि नमः।

५. ॐ ऐं ह्रीं श्रीं षष्टीशानन्दनाथ श्रीपादुकां पूजयामि नमः।

६. ॐ ऐं ह्रीं श्रीं ज्ञानानन्दनाथ श्रीपादुकां पूजयामि नमः।

७. ॐ ऐं ह्रीं श्रीं सत्यानन्दनाथ श्रीपादुकां पूजयामि नमः।

८. ॐ ऐं ह्रीं श्रीं पूर्णानन्दनाथ श्रीपादुकां पूजयामि नमः।

९. ॐ ऐं ह्रीं श्रीं मित्रेशानन्दनाथ श्रीपादुकां पूजयामि नमः।

१०. ॐ ऐं ह्रीं श्रीं स्वभावानन्दनाथ श्रीपादुकां पूजयामि नमः।

११. ॐ ऐं ह्रीं श्रीं प्रतिभानन्दनाथ श्रीपादुकां पूजयामि नमः।

१२. ॐ ऐं ह्रीं श्रीं सुभगानन्दनाथ श्रीपादुकां पूजयामि नमः।

## मूलत्रिकोणपूर्वरेखासु

## C दिव्यौघम् - प्रथमरेखाया

१३. ॐ ऐं ह्रीं श्रीं परप्रकाशानन्दनाथ श्रीपादुकां पूजयामि नमः।

१४. ॐ ऐं ह्रीं श्रीं परशिवानन्दनाथ श्रीपादुकां पूजयामि नमः।

१५. ॐ ऐं ह्रीं श्रीं परशक्त्यम्बा श्रीपादुकां पूजयामि नमः।

१६. ॐ ऐं ह्रीं श्रीं कौलेश्वरानन्द नाथ श्रीपादुकां पूजयामि नमः।

१७. ॐ ऐं ह्रीं श्रीं शुक्लदेव्यम्बा श्रीपादुकां पूजयामि नमः।

१८. ॐ ऐं ह्रीं श्रीं कुलेश्वरानन्दनाथ श्रीपादुकां पूजयामि नमः।

१९. ॐ ऐं ह्रीं श्रीं कामेश्वर्यम्बा श्रीपादुकां पूजयामि नमः।

## D सिद्धौघम् - मध्यरेखायाम्

२०. ॐ ऐं ह्रीं श्रीं भोगानन्दनाथ श्रीपादुकां पूजयामि नमः।
२१. ॐ ऐं ह्रीं श्रीं क्लिन्नानन्दनाथ श्रीपादुकां पूजयामि नमः।
२२. ॐ ऐं ह्रीं श्रीं समयानन्दनाथ श्रीपादुकां पूजयामि नमः।
२३. ॐ ऐं ह्रीं श्रीं सहजानन्दनाथ श्रीपादुकां पूजयामि नमः।

## E मानवौघम् - तृतीयरेखायाम्

२४. ॐ ऐं ह्रीं श्रीं गगनानन्दनाथ श्रीपादुकां पूजयामि नमः।
२५. ॐ ऐं ह्रीं श्रीं विश्वानन्दनाथ श्रीपादुकां पूजयामि नमः।
२६. ॐ ऐं ह्रीं श्रीं विमलानन्दनाथ श्रीपादुकां पूजयामि नमः।
२७. ॐ ऐं ह्रीं श्रीं मदनानन्दनाथ श्रीपादुकां पूजयामि नमः।
२८. ॐ ऐं ह्रीं श्रीं भुवनानन्दनाथ श्रीपादुकां पूजयामि नमः।
२९. ॐ ऐं ह्रीं श्रीं लीलाम्बा श्रीपादुकां पूजयामि नमः।
३०. ॐ ऐं ह्रीं श्रीं स्वात्मानन्दनाथ श्रीपादुकां पूजयामि नमः।
३१. ॐ ऐं ह्रीं श्रीं प्रियानन्दनाथ श्रीपादुकां पूजयामि नमः।

## F वृत्त-मन्त्र-द्रष्टागणः




३२. *श्री महादेवः श्री*

**ॐ ऐं ह्रीं श्रीं "ह स क ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं "**श्रीशाङ्करी विद्या श्रीपादुकां पूजयामि नमः।

३३. *श्री महाविष्णुः श्री*

**ॐ ऐं ह्रीं श्रीं "ह स क ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं स ह क ल ह्रीं स ह क ह ल ह्रीं स ह स क ल ह्रीं "** श्रीवैष्णवी विद्या श्रीपादुकां पूजयामि नमः।

३४. *श्री विरिञ्ची श्री*

**ॐ ऐं ह्रीं श्रीं "क ए ई ल ह्रीं ह क ह ल ह्रीं ह स क ल ह्रीं "** श्रीबृह्माणी विद्या श्रीपादुकां पूजयामि नमः।

३५. *श्री स्कन्द श्री*

**ॐ ऐं ह्रीं श्रीं "ह स क ल ह्रीं ह स क ह ह ल ह्रीं स क ल ह्रीं "** श्रीस्कन्द विद्या श्रीपादुकां पूजयामि नमः।

३६. *श्री नन्दी श्री*

**ॐ ऐं ह्रीं श्रीं "सएईलह्रीं सहकहलह्रीं सकलह्रीं"** श्रीनन्दी विद्या श्रीपादुकां पूजयामि नमः।

३७. *श्री मन्मथ श्री*

**ॐ ऐं ह्रीं श्रीं "कएईलह्रीं हसकहलह्रीं सकलह्रीं"** श्रीमन्मथी विद्या श्रीपादुकां पूजयामि नमः।

३८. *श्री दुर्वास श्री*

**ॐ ऐं ह्रीं श्रीं "कएइलह्रीं हसकहलह्रीं सकलह्रीं"** श्रीदुर्वास (दिक्षु) विद्या श्रीपादुकां पूजयामि नमः।

३९. *श्री लोपामुद्रा श्री*

**ॐ ऐं ह्रीं श्रीं "हसकलह्रीं हसकहलह्रीं सकलह्रीं"** श्रीलोपामुद्रा विद्या श्रीपादुकां पूजयामि नमः।

४०. *श्री अगस्त्य श्री*

**ॐ ऐं ह्रीं श्रीं "कएइलह्रीं हसकहलह्रीं सहसकलह्रीं"** श्रीअगस्त्य विद्या श्रीपादुकां पूजयामि नमः।

४१. *श्री इन्द्र श्री*

**ॐ ऐं ह्रीं श्रीं "कएईलह्रीं हसकहलह्रीं सकलह्रीं"** श्री चक्र विद्या श्रीपादुकां पूजयामि नमः।

४२. *श्री सूर्य श्री*

**ॐ ऐं ह्रीं श्रीं "हसकलह्रीं सहकलह्रीं सकहलह्रीं"** श्रीसौरी विद्या श्रीपादुकां पूजयामि नमः।

४३. *श्री यम श्री*

**ॐ ऐं ह्रीं श्रीं "कहएईलह्रीं हलएईलह्रीं सकएईलह्रीं"** श्रीयाम्य विद्या श्रीपादुकां पूजयामि नमः।

४४. *श्री कुबेर श्री*

**ॐ ऐं ह्रीं श्रीं "हसकएईलह्रीं हसकहएईलह्रीं सहकएईलह्रीं"** श्रीकुबेरी विद्या श्रीपादुकां पूजयामि नमः।

४५. *श्री चन्द्र श्री*

**ॐ ऐं ह्रीं श्रीं "सहकएईलह्रीं सहकहएईलह्रीं हसकएईलह्रीं"** श्रीचन्द्रमा विद्या श्रीपादुकां पूजयामि नमः।

४६. *श्री मनु श्री*

**ॐ ऐं ह्रीं श्रीं "कहएईलह्रीं हकएईलह्रीं सकएईलह्रीं"** श्रीमानवी विद्या श्रीपादुकां पूजयामि नमः।

## G. चतुरश्रकोणेषु सनकादयः




४८. ॐ ऐं ह्रीं श्रीं सनक श्रीपादुकां पूजयामि नमः।

४९. ॐ ऐं ह्रीं श्रीं सनन्दन श्रीपादुकां पूजयामि नमः।

५०. ॐ ऐं ह्रीं श्रीं सनातन श्रीपादुकां पूजयामि नमः।

५१. ॐ ऐं ह्रीं श्रीं सनत्कुमार श्रीपादुकां पूजयामि नमः।

## H. चतुरश्रकोण द्वारे




58 57 56 55 54 53 52

H

**सप्तर्षिगणः**

५२. ॐ ऐं ह्रीं श्रीं अदितिसमेत कश्यपऋषिः श्रीपादुकां पूजयामि नमः।

५३. ॐ ऐं ह्रीं श्रीं अनुसूयासमेत अत्रिऋषिः श्रीपादुकां पूजयामि नमः।

५४. ॐ ऐं ह्रीं श्रीं सुशीलासमेत भरद्वाजऋषिः श्रीपादुकां पूजयामि नमः।

५५. ॐ ऐं ह्रीं श्रीं कुमुद्वतिसमेत विश्वामित्रऋषिः श्रीपादुकां पूजयामि नमः।

५६. ॐ ऐं ह्रीं श्रीं अहल्यासमेत कौतमऋषिः श्रीपादुकां पूजयामि नमः।

५७. ॐ ऐं ह्रीं श्रीं रेणुकासमेत जमदग्निऋषिः श्रीपादुकां पूजयामि नमः।

५८. ॐ ऐं ह्रीं श्रीं अरुन्धतीसमेत वसिष्ठऋषिः श्रीपादुकां पूजयामि नमः।

## I. भूपुरे वायव्यादि पश्चिमान्तस्वष्टदिक्षु ३२ सिद्धगणाः




**VI वायुकोणेः**

५९. ॐ ऐं ह्रीं श्रीं आदिनाथमहेश्वर श्रीपादुकां पूजयामि नमः।

६०. ॐ ऐं ह्रीं श्रीं मत्स्येन्द्रानन्दनाथ श्रीपादुकां पूजयामि नमः।

६१. ॐ ऐं ह्रीं श्रीं शारदानन्दनाथ श्रीपादुकां पूजयामि नमः।

६२. ॐ ऐं ह्रीं श्रीं गौरंगीनाथ श्रीपादुकां पूजयामि नमः।

**VII उत्तरद्वारेः**

६३. ॐ ऐं ह्रीं श्रीं मीननाथ श्रीपादुकां पूजयामि नमः।

६४. ॐ ऐं ह्रीं श्रीं गोरक्षकनाथ श्रीपादुकां पूजयामि नमः।

६५. ॐ ऐं ह्रीं श्रीं विलेपाक्षनाथ श्रीपादुकां पूजयामि नमः।

६६. ॐ ऐं ह्रीं श्रीं बिलेशयनाथ श्रीपादुकां पूजयामि नमः।

**VIII ईशानकोणेः**

६७. ॐ ऐं ह्रीं श्रीं मन्त्रभैरवयोगी श्रीपादुकां पूजयामि नमः।

६८. ॐ ऐं ह्रीं श्रीं सिद्धनाथ श्रीपादुकां पूजयामि नमः।

६९. ॐ ऐं ह्रीं श्रीं बुद्धनाथ श्रीपादुकां पूजयामि नमः।

७०. ॐ ऐं ह्रीं श्रीं कुक्कुडीनाथ श्रीपादुकां पूजयामि नमः।

**I पूर्वद्वारेः**

७१. ॐ ऐं ह्रीं श्रीं पौरण्डनाथ श्रीपादुकां पूजयामि नमः।

७२. ॐ ऐं ह्रीं श्रीं सुरानन्दनाथ श्रीपादुकां पूजयामि नमः।

७३. ॐ ऐं ह्रीं श्रीं सिद्धपादनाथ श्रीपादुकां पूजयामि नमः।

७४. ॐ ऐं ह्रीं श्रीं कपर्दीनाथ श्रीपादुकां पूजयामि नमः।

**II अग्निकोणे**

७५. ॐ ऐं ह्रीं श्रीं कारणीनाथ श्रीपादुकां पूजयामि नमः।

७६. ॐ ऐं ह्रीं श्रीं पूज्यपादनाथ श्रीपादुकां पूजयामि नमः।

७७. ॐ ऐं ह्रीं श्रीं बिल्वनाथ श्रीपादुकां पूजयामि नमः।

७८. ॐ ऐं ह्रीं श्रीं निरञ्जननाथ श्रीपादुकां पूजयामि नमः।

**III दक्षिणद्वारे**

७९. ॐ ऐं ह्रीं श्रीं बिन्दुनाथ श्रीपादुकां पूजयामि नमः।

८०. ॐ ऐं ह्रीं श्रीं कपालीनाथ श्रीपादुकां पूजयामि नमः।

८१. ॐ ऐं ह्रीं श्रीं काकचण्डीश्वरनाथ श्रीपादुकां पूजयामि नमः।

८२. ॐ ऐं ह्रीं श्रीं सूक्ष्मनाथ श्रीपादुकां पूजयामि नमः।

**IV निर्ऋतिः कोणे**

८३. ॐ ऐं ह्रीं श्रीं प्रभुत्वनाथ श्रीपादुकां पूजयामि नमः।

८४. ॐ ऐं ह्रीं श्रीं गोण्डानाथ श्रीपादुकां पूजयामि नमः।

८५. ॐ ऐं ह्रीं श्रीं शालीनाथ श्रीपादुकां पूजयामि नमः।

८६. ॐ ऐं ह्रीं श्रीं घण्डीणीनाथ श्रीपादुकां पूजयामि नमः।

**V पश्चिमद्वारे**

८७. ॐ ऐं ह्रीं श्रीं बालकनाथ श्रीपादुकां पूजयामि नमः।

८८. ॐ ऐं ह्रीं श्रीं नागबोधनाथ श्रीपादुकां पूजयामि नमः।

८९. ॐ ऐं ह्रीं श्रीं चण्डनाथ श्रीपादुकां पूजयामि नमः।

९०. ॐ ऐं ह्रीं श्रीं कापालिकनाथ श्रीपादुकां पूजयामि नमः।

**J. भूपुरे वायव्यादिपश्चिमान्तस्वष्टदिक्षु अष्टौ चिरंजीविनः**

VI ९१. ॐ ऐं ह्रीं श्रीं अश्वत्थामा श्रीपादुकां पूजयामि नमः।

VII ९२. ॐ ऐं ह्रीं श्रीं महाबलि श्रीपादुकां पूजयामि नमः।

VIII ९३. ॐ ऐं ह्रीं श्रीं व्यास श्रीपादुकां पूजयामि नमः।

I ९४. ॐ ऐं ह्रीं श्रीं हनूमान् श्रीपादुकां पूजयामि नमः।

II ९५. ॐ ऐं ह्रीं श्रीं विभीषण श्रीपादुकां पूजयामि नमः।




III ९६. ॐ ऐं ह्रीं श्रीं कृपाचार्य श्रीपादुकां पूजयामि नमः।

IV ९७. ॐ ऐं ह्रीं श्रीं परशुराम श्रीपादुकां पूजयामि नमः।

V ९८. ॐ ऐं ह्रीं श्रीं मार्कण्डेय श्रीपादुकां पूजयामि नमः।

## K. ईशान-चतुरस्रकोणे - स्कन्दपञ्चकम्




९९. ॐ ऐं ह्रीं श्रीं श्रीस्कन्द श्रीपादुकां पूजयामि नमः।

१००. ॐ ऐं ह्रीं श्रीं वामदेव श्रीपादुकां पूजयामि नमः।

१०१. ॐ ऐं ह्रीं श्रीं नीलकण्ठ श्रीपादुकां पूजयामि नमः।

१०२. ॐ ऐं ह्रीं श्रीं वीरभद्र श्रीपादुकां पूजयामि नमः।

१०३. ॐ ऐं ह्रीं श्रीं अगस्त्य श्रीपादुकां पूजयामि नमः।

१०४. ॐ ऐं ह्रीं श्रीं महामृत्युञ्जय श्रीपादुकां पूजयामि नमः।

## L. ईशान-चतुरस्र दक्षिणभागः - नन्दीपञ्चकम्




१०५. ॐ ऐं ह्रीं श्रीं नन्दिकेश्वर श्रीपादुकां पूजयामि नमः।

१०६. ॐ ऐं ह्रीं श्रीं पतञ्जलि श्रीपादुकां पूजयामि नमः।

१०७. ॐ ऐं ह्रीं श्रीं व्याघ्रपाद श्रीपादुकां पूजयामि नमः।

१०८. ॐ ऐं ह्रीं श्रीं तिरुमूल (श्रीमूलः) श्रीपादुकां पूजयामि नमः।

१०९. ॐ ऐं ह्रीं श्रीं शिवयोगी श्रीपादुकां पूजयामि नमः।

११०. ॐ ऐं ह्रीं श्रीं मन्त्रराज नृसिंहः श्रीपादुकां पूजयामि नमः।

### M. पूर्वचतुरस्रकोणेः - नारायणपञ्चकम्




१११. ॐ ऐं ह्रीं श्रीं श्रीमन् नारायण श्रीपादुकां पूजयामि नमः।

११२. ॐ ऐं ह्रीं श्रीं वासुदेव श्रीपादुकां पूजयामि नमः।

११३. ॐ ऐं ह्रीं श्रीं संकर्षण श्रीपादुकां पूजयामि नमः।

११४. ॐ ऐं ह्रीं श्रीं प्रद्युम्न श्रीपादुकां पूजयामि नमः।

११५. ॐ ऐं ह्रीं श्रीं अनिरुद्ध श्रीपादुकां पूजयामि नमः।

११६. ॐ ऐं ह्रीं श्रीं पद्मभूवर श्रीपादुकां पूजयामि नमः।

### N. तदोधो रेखायां भक्त पञ्चकं

११७. ॐ ऐं ह्रीं श्रीं नारद श्रीपादुकां पूजयामि नमः।

११८. ॐ ऐं ह्रीं श्रीं बलभद्र श्रीपादुकां पूजयामि नमः।

११९. ॐ ऐं ह्रीं श्रीं अर्जुन श्रीपादुकां पूजयामि नमः।

१२०. ॐ ऐं ह्रीं श्रीं अक्रूर श्रीपादुकां पूजयामि नमः।

१२१. ॐ ऐं ह्रीं श्रीं उद्धवः श्रीपादुकां पूजयामि नमः।

१२२. ॐ ऐं ह्रीं श्रीं कपिलाचार्य श्रीपादुकां पूजयामि नमः।

### O. पूर्वचतुरस्र - दक्षिणभागः - वशिष्ठपञ्चकम्




१२३. ॐ ऐं ह्रीं श्रीं वसिष्ठ श्रीपादुकां पूजयामि नमः।

१२४. ॐ ऐं ह्रीं श्रीं शक्ति श्रीपादुकां पूजयामि नमः।

१२५. ॐ ऐं ह्रीं श्रीं राम श्रीपादुकां पूजयामि नमः।

१२६. ॐ ऐं ह्रीं श्रीं लक्ष्मण श्रीपादुकां पूजयामि नमः।

१२७. ॐ ऐं ह्रीं श्रीं मारुति श्रीपादुकां पूजयामि नमः।

१२८. ॐ ऐं ह्रीं श्रीं पराशर श्रीपादुकां पूजयामि नमः।

### P. आग्नेयचतुर-व्यास-पंचकम्

१२९. ॐ ऐं ह्रीं श्रीं वेदव्यास श्रीपादुकां पूजयामि नमः।

१३०. ॐ ऐं ह्रीं श्रीं पौल ऋक्शाखाचार्य श्रीपादुकां पूजयामि नमः।

१३१. ॐ ऐं ह्रीं श्रीं वैशम्पायन कृष्णयजुश्शाखाचार्य श्रीपादुकां पूजयामि नमः।

१३१A. ॐ ऐं ह्रीं श्रीं शुक्लयजुश्शाखाचार्य याज्ञवल्कय श्रीपादुकां पूजयामि नमः।

१३२. ॐ ऐं ह्रीं श्रीं जैमिनि सामशाखाचार्य श्रीपादुकां पूजयामि नमः।

१३३. ॐ ऐं ह्रीं श्रीं सुमन्तु अथर्वशाखार्चाय श्रीपादुकां पूजयामि नमः।

### Q. आग्नेयचतुरस्रधो अन्तो भागः (पूर्वादिपश्चिमशुकायः)

१३४. ॐ ऐं ह्रीं श्रीं शुकाचार्य श्रीपादुकां पूजयामि नमः।

१३५. ॐ ऐं ह्रीं श्रीं त्रपु श्रीपादुकां पूजयामि नमः।

१३६. ॐ ऐं ह्रीं श्रीं विद्याधर श्रीपादुकां पूजयामि नमः।

१३७. ॐ ऐं ह्रीं श्रीं जाबालि श्रीपादुकां पूजयामि नमः।

१३८. ॐ ऐं ह्रीं श्रीं श्रीगौडपाद श्रीपादुकां पूजयामि नमः।

१३९. ॐ ऐं ह्रीं श्रीं श्रीगोविन्दभगवत्पाद श्रीपादुकां पूजयामि नमः।

## R. नैर्ऋतचतुरश्रे आचार्य पञ्चकम




१४०. ॐ ऐं ह्रीं श्रीं श्रीशङ्करभगवत्पाद श्रीपादुकां पूजयामि नमः।

१४१. ॐ ऐं ह्रीं श्रीं पद्मपाद श्रीपादुकां पूजयामि नमः।

१४२. ॐ ऐं ह्रीं श्रीं तोटक श्रीपादुकां पूजयामि नमः।

१४३. ॐ ऐं ह्रीं श्रीं हस्तामलक श्रीपादुकां पूजयामि नमः।

१४४. ॐ ऐं ह्रीं श्रीं सुरेश्वर श्रीपादुकां पूजयामि नमः।

### तद्वामभागे द्वौ

१४५. ॐ ऐं ह्रीं श्रीं श्रीविद्याशङ्कर श्रीपादुकां पूजयामि नमः।

१४६. ॐ ऐं ह्रीं श्रीं विद्यारण्य श्रीपादुकां पूजयामि नमः।

## S. ईशानचतुरस्रः - अतो भागः (उत्तरादिदक्षिणम्) कल्पाचार्याः




१४७. ॐ ऐं ह्रीं श्रीं हयग्रीव श्रीपादुकां पूजयामि नमः।

१४८. ॐ ऐं ह्रीं श्रीं दुर्वास श्रीपादुकां पूजयामि नमः।

१४९. ॐ ऐं ह्रीं श्रीं दत्तात्रेय श्रीपादुकां पूजयामि नमः।

### T. तदधोभागेस्तोत्राचार्यगणः

१५०. ॐ ऐं ह्रीं श्रीं परशुराम श्रीपादुकां पूजयामि नमः।

१५१. ॐ ऐं ह्रीं श्रीं धौम्याचार्य श्रीपादुकां पूजयामि नमः।

१५२. ॐ ऐं ह्रीं श्रीं मूकाचार्य श्रीपादुकां पूजयामि नमः।

### U. वायुकोणचतुरश्रे-उपासकपञ्चकम्

१५३. ॐ ऐं ह्रीं श्रीं स्वतन्त्रानन्दनाथ श्रीपादुकां पूजयामि नमः।

१५४. ॐ ऐं ह्रीं श्रीं पुण्यानन्दनाथ श्रीपादुकां पूजयामि नमः।

१५५. ॐ ऐं ह्रीं श्रीं कालीदास (शृंगारभट्टारक) श्रीपादुकां पूजयामि नमः।

१५६. ॐ ऐं ह्रीं श्रीं लक्ष्मीधर श्रीपादुकां पूजयामि नमः।

१५७. ॐ ऐं ह्रीं श्रीं भास्करराय श्रीपादुकां पूजयामि नमः।

### V. तत्र दक्षिणभागे - जीवन्मुक्तौ




१५८. ॐ ऐं ह्रीं श्रीं उपनिषद्ब्रह्मेन्द्र श्रीपादुकां पूजयामि नमः।

१५९. ॐ ऐं ह्रीं श्रीं सदाशिव ब्रह्मेन्द्र श्रीपादुकां पूजयामि नमः।

### W. पश्चिमचतुरस्रं स्वगुरुपञ्चकम्

१६०. ॐ ऐं ह्रीं श्रीं श्रीशान्तानन्दनाथ श्रीपादुकां पूजयामि नमः।

१६१. ॐ ऐं ह्रीं श्रीं श्रीविमलानन्दनाथ श्रीपादुकां पूजयामि नमः।

१६२. ॐ ऐं ह्रीं श्रीं श्रीप्रकाशानन्दनाथ श्रीपादुकां पूजयामि नमः।

१६३. ॐ ऐं ह्रीं श्रीं श्रीआत्मानन्दनाथ श्रीपादुकां पूजयामि नमः।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हंसशिवस्क्षोहं हंसः हस्ख्फ्रें हसक्षमलवरंयू हसौः सहक्षमलवयीं स्हौः हंसः शिवःस्मोहं हंसः स्वात्माराम पञ्जर विलीन वेजसे श्रीपरमेष्टिगुरवेनमः श्रीगुहानन्दनाथ श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सोहं हंसः शिवः हस्ख्फ्रें हसक्षामलवयूं हसौः संक्षामलवरयीं स्हौ सोहं हंसः शिवः स्वच्छप्रकाशविमर्शहितवे श्रीपरमगुरवे नमः श्रीचिदानन्दनाथ श्रीपादुकां पूजयामि नमः।**

ततः— **श्री गुरूमण्डलदेवताभ्यो नमः** पुष्पाञ्जलि कृत्वा-धूप-दीप नैवेद्यैः षोडश उपचारैः सम्पूज्य। ततः

**ॐ ऐं ह्रीं श्रीं अभीष्ट सिद्धिं मे देहि शरणागत वत्सले। भक्त्या समर्पये तुभ्यं गुरूमण्डलसमर्चनम्** इति देव्याः वामहस्ते पूजां समर्पयेत्।

**गुरुमण्डलार्चनम् समाप्तः**

लेखनदोषाणि मनीषिभिः क्षन्तव्यानि

२३.१०.५४ दिने श्री हंसान्दः नाथ महोदया के हस्तलिपि पुस्तक से प्राप्त।

।। इति श्रीकाञ्ची उपनिषद्ब्रह्मेन्द्रमठाधीश श्रीइष्टसिद्धेन्द्रसरस्वतीयतिशिष्यश्रीकृष्णानन्देन्द्र-सरस्वतीयति शिष्य श्रीपूर्णानन्देन्द्रसरस्वतीयतिशिष्यश्रीज्ञानानन्देन्द्रसरस्वतीयतिविरचिते श्रीविद्यामहार्णवे श्रीदीक्षाप्रकरणं समाप्तम्।।

।।श्रीगुरुभ्यो नमः।।

"परिरक्षणीय परिवेदक परमार्थरत्न"

# श्रीविद्यामहार्णवः

(सचित्र-सम्पूर्ण-सपर्यापद्धति ग्रन्थः)

श्रीभूमाम्बा श्रीगुहानन्दनाथ लहरी

कल्पतरुः

श्रीइच्छाशक्तिः

## प्रथमो भागः

## २. श्रीमहागणपति-प्रकरणम्

दाक्षिणात्य

परमहंस-परिव्राजक

श्री श्री श्री ज्ञानानन्देन्द्रसरस्वतीयति-विरचितः

वाराणसी, चेन्नै, हैदराबाद एवं बेंगलूर

# द्वितीयो मुद्राकल्प तरङ्गः



**१३. सर्वबीजम्**— ऊर्ध्वाधस्तिरः प्रसृते वामदक्षकनिष्ठाग्रे अनामाभ्यां धृत्वा अर्धचन्द्राकृतियोजितेषु तर्जन्यंगुष्ठेषु मिथः श्लिष्टाभ्यां ऋजुभ्यां मध्यमाभ्यां तर्जन्योः संबन्धे सर्वबीजम्।।



**१४. सर्वयोनिः**— तिर्यङ् मिलिताग्रयोः मध्य मयो पश्चात् ऊर्ध्यायः स्थिते वाम दक्षानामिके तिरः प्रसारिते तर्जनीभ्यां निपीड्य वामं कनिष्ठां दक्षिणया धृत्वा अंगुष्ठाग्रयोः मध्यमा पुरो मध्यपर्वद्वय संबन्धे सर्वयोनिः।



**१५. सर्वत्रिखण्डा**— सर्वयोन्यामेव ऋजूकृतयोः कनिष्ठयोः मध्यमयोः अंगुष्ठयोश्च पृथङ्मिथः संस्पर्शे सर्वत्रिखण्डा।।



**१६. मत्स्यः**— अधोमुखप्रसारितं वामदक्षकरतल-युगमधरोत्तरं विधाय अंगुष्ठद्वय-चालने मत्स्यः।



**१७. अस्त्रम्**— लक्ष्यमभितः छोटिकां दक्षमध्यमा-तर्जनीभ्यां अधिवामकरतलं त्रिस्ताडने अस्त्रम्।



**१८. अवकुण्ठनम्**— अधोमुखसस्य दक्ष-वाम मुष्टिद्वयस्य प्रसारितयोः तर्जन्योः स्वस्व भागमारभ्य क्रमेण लक्ष्यं परितः प्रादक्षिण्य वामावर्ताभ्यां परिभ्रमणे अवकुण्ठनम्।



**१९. धेनुः**— अभिमुख-मन्योन्य-ग्रथितानां दक्ष-वाम-करांगुलीनां क्रमेण कनिष्ठानामे तर्जनी मध्ये च संयोज्य अधोमुखी करणे धेनुः।



**२० गालिनी**— उत्तानस्य वामकरस्य मविरलं आकुंचितैः अनामा-मध्यमातर्जन्यग्रैः अधोमुखस्य दक्षस्य वक्रीकृत न तानि संयोज्य कनिष्ठांगुष्ठाग्राणां संबन्धे गलिनी।



**२१. आवाहनी**— विततोत्तान ऊर्ध्वाधो व्यापारितो अंजलिः आवाहनी।



**२२. संस्थापनी**— विततोत्तान न्यूब्जांजलिः संस्थापनी।



**२३. सन्निधापनी**— उदंगुष्ठयोः मुष्ट्योरभिमुखयोगे सन्निधापनी



**२४. सन्निरोधिनी**— उदंगुष्ठयोः मुष्ट्योरभिमुखयोगे अन्तःप्रविष्ट-अंगुष्ठमिथः स्पृष्टनखा सन्निरोधिनी।

श्रीगणेशाय नमः श्रीसरस्वत्यै नमः श्रीगुरुभ्यो नमः

# श्रीविद्यामहार्णवः

## श्रीभूमाम्बा श्रीगुहानन्दनाथ लहरी

## कल्पतरुः

## प्रथमो भागः

## श्रीमहागणपति-प्रकरणम्

### वेदोक्त श्रीगणेश-स्तवनम्

नि षु सीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् ।
न ऋते त्वत्क्रियते किं चनारे महामर्कं मघवञ्चित्रमर्च ।।

(ऋग्वेद १० । ११२ । ९)

ॐ गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ।।

(ऋग्वेद २ । २३ । १)

तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्तिः प्रचोदयात् ।।

(तैत्तिरीय आरण्यक, प्रपाठक १०, अनुवाक १)

गणानां त्वा गणपतिँ हवामहे प्रियाणां त्वा प्रियपतिँ हवामहे
निधीनां त्वा निधिपतिँ हवामहे वसो मम ।
आहमजानि गर्भधमा त्वमजासि गर्भधम् ।।

(शुक्लयजुर्वेद २३ । १९)

नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो ।
नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः ।।

(शुक्लयजुर्वेद १६ । २५)

उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।
उप प्र यन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ।।

(ऋग्वेद १ । ४० । १)

**प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता ।**
**अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ।।**
(ऋग्वेद १ । ४० । ३)

**प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।**
**यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ।।**
(ऋग्वेद १ । ४० । ५)

## १. चतुरावृत्तितर्पणखण्डः

**इत्थं सद्गुरोराहितदीक्षो महाविद्याराधन-**
**प्रत्यूहापोहाय गाणनायकीं पद्धतिमामृशेत्।।**

श्रीमान् साधकः ब्राह्मे मुहूर्त्ते उत्थाय श्रीगुरुपादुकास्मरणपूर्व हृदयकमल उद्यदरुणकिरणपाटलस्य देवस्य करटिवदनस्य ध्यानेन परिप्लुष्टनिशेषदोषत्वं आत्मनस्त तत्प्रभारुणतनुत्वञ्च भावयित्वा शय्यां त्यक्त्वा श्रीविद्यासपर्याक्रमोक्तशौचदन्तधावनादीन् कृत्वा, स्नात्वा, धौते वाससी परिधाय सन्ध्यावन्दनं कृत्वा **ॐ गं आत्मतत्त्वाय स्वाहा। ॐ गं विद्यातत्त्वाय स्वाहा। ॐ गं शिवतत्त्वाय स्वाहा। ॐ गं सर्वतत्त्वाय स्वाहा।** इति तत्त्वाचमनं कृत्वा मूलेन प्राणानायम्य **''ॐ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्तिः प्रचोदयात्''** इति गणपतिगायत्र्या, **ॐ सूर्यमण्डलस्थाय महागणपतये एषोऽर्घ्यः स्वाहा,** इति त्रिः अर्घ्यं दत्वा। ऋष्यादिषडङ्गन्यासपूर्वकं अष्टोत्तरशतवारं वा अष्टाविंशतिवारं मूलमन्त्रं जपित्वा। अनेन कर्मणा भगवान् श्रीमहागणपतिः प्रीयताम्। इति सन्ध्यां गणपतये निवेदयेत्। ततो गुरुपादुकामन्त्रं जपेत्।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं हस्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं हसौः स्हौः श्रीगुरुपादुकां पूजयामि।**

## *चतुरावृत्तितर्पणम्*

आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, मम श्रीमहागणपतिप्रसादसिद्धये सर्वविघ्ननिवारणार्थं चतुरावृत्तितर्पणं करिष्ये इति संकल्प्य नद्यादौ हस्तमात्रं चतुरस्रमण्डलं परिगृह्य—

**ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे। तेन सत्येन मे देव! तीर्थं देहि दिवाकर।।**

इति मन्त्रेण सूर्यमभ्यर्थ्य—

**आवाहयामि त्वां देवि ! तर्पणायेह सुन्दरि। एहि गङ्गे ! नमस्तुभ्यं सर्वतीर्थसमन्विते।।**

इति गङ्गां प्रार्थ्य **ॐ 'ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः'** इत्युच्चार्य क्रों इत्यङ्कुशमुद्रया गङ्गाऽऽदितीर्थान्यावाह्य, वं इत्यमृतबीजेन सप्तवारमभिमन्त्र्य, तत्र चतुरस्राष्टदलषट्कोणत्रिकोणात्मकं महागणपतियन्त्रं विचिन्त्य, स्वदेहे ऋष्यादिन्यासान् न्यस्य, तद्यथा

**अस्य श्रीमहागणपतिमहामन्त्रस्य गणक ऋषिः, निचृद्गायत्रीच्छन्दः, महागणपतिर्देवता, महागणपतितर्पणे विनियोगः।**

अथ न्यास:—

**ॐ श्रीं ह्रीं क्लीं ॐ गां अङ्गुष्ठाभ्यां—हृदयाय नमः।**

**ॐ श्रीं ह्रीं क्लीं श्रीं गीं तर्जनीभ्यां—शिरसे स्वाहा।**

**ॐ श्रीं ह्रीं क्लीं ह्रीं गूं मध्यमाभ्यां—शिखायै वषट्।**

**ॐ श्रीं ह्रीं क्लीं क्लीं गैं अनामिकाभ्यां—कवचाय हुंम्।**

**ॐ श्रीं ह्रीं क्लीं ग्लौं गौं कनिष्ठिकाभ्यां—नेत्रत्रयाय बौषट्।**

**ॐ श्रीं ह्रीं क्लीं गं गः करतलकरपृष्ठाभ्यां—अस्त्राय फट्।**

ध्यानम्—

**'ध्याये हृदब्जे शोणाङ्गं वामोत्सङ्गविभूषया। सिद्धलक्ष्म्या समाश्लिष्टपार्श्वमर्धेन्दुशेखरम्।।**
**वामाधःकरतो दक्षाधःकरान्तेषु पुष्करे। परिष्कृतं मातुलुङ्गगदापुण्ड्रेक्षुकार्मुकैः ।।**
**शूलेन शङ्खचक्राभ्यां पाशोत्पलयुगेन च। शालिमञ्जरिकास्वीयदन्ताञ्चलमणीघटैः ।।**
**स्रवन्मदञ्च सानन्दं श्रीश्रीपत्यादिसंवृतम्। अशेषविघ्नविध्वंसनिघ्नं विघ्नेश्वरं भजे।।**

(इति ध्यात्वा)

(यन्त्रे सावरणदेवमावाह्य), **ततः तद्यन्त्रे मूर्तिं च गन्धपुष्पदूर्वांकुरैः पञ्चोपचारैरर्चयेत्। तद्यथा—**

**ॐ श्रीं ह्रीं क्लीं महागणपतये लं पृथिव्यात्मकं गन्धं कल्पयामि नमः** (त्रिवारम्)।

**ॐ श्रीं ह्रीं क्लीं महागणपतये हं आकाशात्मकंपुष्पं कल्पयामि नमः** (त्रिवारम्)।

**ॐ श्रीं ह्रीं क्लीं महागणपतये यं वाय्वात्मकंधूपं कल्पयामि नमः** (त्रिवारम्)।

**ॐ श्रीं ह्रीं क्लीं महागणपतये रं वह्न्यात्मकंदीपं कल्पयामि नमः** (त्रिवारम्)।

**ॐ श्रीं ह्रीं क्लीं महागणपतये वं अमृतात्मकंनैवेद्यं कल्पयामि नमः** (त्रिवारम्)।

**ॐ श्रीं ह्रीं क्लीं महागणपतये सं सर्वात्मकं ताम्बूलं कल्पयामि नमः** (त्रिवारम्)।

इति।।

प्रथमं प्रत्यावृत्तिमूलान्ते महागणपतिं तर्पयामीति द्वादशवारं तर्पयित्वा ततः स्वाहान्तेन मूलस्यैकैकेन वर्णेन चतुश्चतुर्वारं प्रतिवर्णान्तमावृत्तेन मूलेन च प्राग्वत् चतुश्चतुर्वारं देवं त्रयोदशसु मिथुनेषु श्रीश्रीपत्यादिषु एकैकां देवतां द्वितीयान्तेन तत्तन्नाम्ना चतुश्चतुर्वारं प्रतिदेवतामावृत्तेन च मूलेन देवं चतुश्चतुर्वारं तर्पयेत्। यथा—

**ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा महागणपतिं तर्पयामि।** (द्वादशवारम्)।

| | | | |
|---|---|---|---|
| **ॐ श्रीं ह्रीं क्लीं ॐ स्वाहा** | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| मूलमन्त्रेण— | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| **ॐ श्रीं ह्रीं क्लीं श्रीं स्वाहा** | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| मूलेन— | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| **ॐ श्रीं ह्रीं क्लीं ह्रीं स्वाहा** | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| मूलेन— | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| **ॐ श्रीं ह्रीं क्लीं क्लीं स्वाहा** | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| मूलेन— | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| **ॐ श्रीं ह्रीं क्लीं ग्लौं स्वाहा** | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| मूलेन— | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| **ॐ श्रीं ह्रीं क्लीं गं स्वाहा** | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| मूलेन— | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| **ॐ श्रीं ह्रीं क्लीं गं स्वाहा** | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| मूलेन— | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| **ॐ श्रीं ह्रीं क्लीं णं स्वाहा** | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| मूलेन— | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| **ॐ श्रीं ह्रीं क्लीं पं स्वाहा** | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| मूलेन— | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| **ॐ श्रीं ह्रीं क्लीं तं स्वाहा** | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| मूलेन— | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| **ॐ श्रीं ह्रीं क्लीं ये स्वाहा** | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| मूलेन— | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| **ॐ श्रीं ह्रीं क्लीं वं स्वाहा** | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| मूलेन— | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| **ॐ श्रीं ह्रीं क्लीं रं स्वाहा** | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| मूलेन— | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| **ॐ श्रीं ह्रीं क्लीं वं स्वाहा** | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |
| मूलेन— | **महागणपतिं** | **तर्पयामि।** | (चतुर्वारम्) |

| | | | | |
|---|---|---|---|---|
| ॐ श्रीं ह्रीं क्लीं | रं स्वाहा | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| मूलेन— | | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| ॐ श्रीं ह्रीं क्लीं | दं स्वाहा | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| मूलेन— | | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| ॐ श्रीं ह्रीं क्लीं | सं स्वाहा | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| मूलेन— | | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| ॐ श्रीं ह्रीं क्लीं | र्वं स्वाहा | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| मूलेन— | | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| ॐ श्रीं ह्रीं क्लीं | जं स्वाहा | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| मूलेन— | | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| ॐ श्रीं ह्रीं क्लीं | नं स्वाहा | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| मूलेन— | | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| ॐ श्रीं ह्रीं क्लीं | में स्वाहा | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| मूलेन— | | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| ॐ श्रीं ह्रीं क्लीं | वं स्वाहा | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| मूलेन— | | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| ॐ श्रीं ह्रीं क्लीं | शं स्वाहा | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| मूलेन— | | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| ॐ श्रीं ह्रीं क्लीं | मां स्वाहा | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| मूलेन— | | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| ॐ श्रीं ह्रीं क्लीं | नं स्वाहा | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| मूलेन— | | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| ॐ श्रीं ह्रीं क्लीं | यं स्वाहा | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| मूलेन— | | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| ॐ श्रीं ह्रीं क्लीं | स्वां स्वाहा | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| मूलेन— | | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| ॐ श्रीं ह्रीं क्लीं | हां स्वाहा | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| मूलेन— | | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| ॐ श्रीं ह्रीं क्लीं | श्रियं स्वाहा | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |
| मूलेन— | | महागणपतिं | तर्पयामि। | (चतुर्वारम्) |

ॐ श्रीं ह्रीं क्लीं श्रीपतिं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं गिरिजां स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं गिरिजापतिं स्वाहामहागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं रतिं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं रतिपतिं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं महीं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं महीपतिं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं महालक्ष्मीं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं महागणपतिं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं ऋद्धिं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं आमोदं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं समृद्धिं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं प्रमोदं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं कान्तिं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)

ॐ श्रीं ह्रीं क्लीं सुमुखं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं मदनावतीं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं दुर्मुखं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं मदद्रवां स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं अविघ्नं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं द्राविणीं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं विघ्नकर्त्तारं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं वसुधारां स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं शङ्खनिधिं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं वसुमतीं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)
ॐ श्रीं ह्रीं क्लीं पद्मनिधिं स्वाहा महागणपतिं तर्पयामि। (चतुर्वारम्)
मूलेन— महागणपतिं तर्पयामि। (चतुर्वारम्)

इत्याहृत्य तर्पणसङ्ख्यापिण्डश्चतुश्चत्वारिंशदुत्तरशती (४४४) भवति ।।
तर्पणान्ते उत्तरन्यासान् विधाय पुनर्मूलेन देवमुक्तरीत्या पञ्चोपचारैः संपूजयेत् ।।

**गुह्यातिगुह्यगोप्ता त्वं गृहाण कृततर्पणम् । सिद्धिर्भवतु मे देव त्वत्प्रसादान्मयि स्थिरा।।**
**आयुरारोग्यमैश्वर्यं बलं पुष्टिर्महद्यशः। कवित्वं भुक्तिमुक्ती च चतुरावृत्तितर्पणात् ।।**

अनेन कृतेन तर्पणेन भगवान् श्रीसिद्धलक्ष्मीसहितः श्रीमहागणपतिः प्रीयताम्।।

।। इति चतुरावृत्तितर्पणविधिः।।

## २. सपर्या खण्डः

### *गणपति-सपर्यापद्धतिः*

**ॐ आब्रह्मलोकादाशेषादालोकालोकपर्वतात् । ये वसन्ति द्विजा देवास्तेभ्यो नित्यं नमो नमः।।**
**ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो, वंशर्षिभ्यो नमो गुरुभ्यः।**
**सर्वोपप्लवरहितप्रज्ञानघनप्रत्यगर्थो ब्रह्मैवाहमस्मि, सोऽहमस्मि, ब्रह्माहमस्मि।।**
**श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवम् । सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम्।**
**वीरान्द्व्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकम् । श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम्।।**
**गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः । गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः ।।**

### *यागमन्दिर-प्रवेशः*

ततो यागगृहमागत्य स्थण्डिलं गोमयेनोपलिप्य यागमन्दिरं च रङ्गवल्लीपुष्पमालिकावितानादिभिरलङ्कृत्य द्वारस्य दक्षवामभागयोः ऊर्ध्वभागे च क्रमेण—

**ॐ श्रीं ह्रीं क्लीं भद्रकाल्यै नमः।।** दक्ष शाखायाम् ।।
**ॐ श्रीं ह्रीं क्लीं भैरवाय नमः।।** वाम शाखायाम् ।।
**ॐ श्रीं ह्रीं क्लीं लम्बोदराय नमः।।** ऊर्ध्व शाखायाम्।।

(इति द्वारदेवतास्सम्पूज्य)

### *तत्त्वाचमनम्*

**ॐ गं आत्मतत्त्वाय स्वाहा।।**
**ॐ गं विद्यातत्त्वाय स्वाहा।।**
**ॐ गं शिवतत्त्वाय स्वाहा।।**
**ॐ गं सर्वतत्त्वाय स्वाहा** ( इत्याचम्य )

### *श्रीगुरुपादुकामन्त्रः*

**ॐ श्रीं ह्रीं क्लीं ऐं क्लीं सौः ऐं ग्लौं हंसः शिवः सोऽहं स्वरूपनिरूपणहेतवे श्रीगुरवे नमः अमुकानन्दनाथश्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं ऐं क्लीं सौः ऐं ग्लौं सोऽहं हंसः शिवः स्वच्छप्रकाशविमर्शहेतवे श्रीपरमगुरवे नमः अमुकानन्दनाथश्रीपादुकां पूजयामि नमः।**

**ॐ श्रीं ह्रीं क्लीं ऐं क्लीं सौः ऐं ग्लौं हंसः शिवः सोऽहं हंसः स्वात्मारामपञ्जरविलीनतेजसे श्रीपरमेष्ठिगुरवे नमः अमुकानन्दनाथश्रीपादुकां पूजयामि नमः।।**

इति मृगीमुद्रया गुरुपादुकामुच्चार्य सुमुख-सुवृत्त-चतुरस्र-मुद्गरयोन्याख्याभिः पञ्चभिर्मुद्राभिः श्रीगुरुं वामभुजे प्रणम्य गणपतिमूलेन स्वदक्षभुजे योनिमुद्रया महागणपतिं प्रणमेत्।।

## *घंटापूजा*

**आगमार्थं च देवानां गमनार्थं च रक्षसाम्।**
**कुर्याद् घंटारवं तत्र देवताह्वानलाञ्छनम्।।**

## *सङ्कल्पः*

**शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्।**
**प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये।।**

(मूलेन प्राणानायम्य)। **देशकालौ संकीर्त्य, मम श्रीसिद्धलक्ष्मीसहितमहागणपतिप्रीत्यर्थं यथासंभवद्रव्यैः यथाशक्ति सपर्याक्रमं निर्वर्तयिष्ये, तेन परमेश्वरं प्रीणयामि।।**

(आत्मानमलङ्कृत्य ताम्बूलेन सुरभितवदनः सन् प्रमुदितचित्तः शिवोहं इति भावयेत्)।।

## *आसनपूजा*

आसनमास्तीर्य दक्षिणहस्ते जलमादाय ''**सौः**'' इति द्वादशवारमभिमन्त्र्य तज्जलेन मूलमन्त्रेणासनं प्रोक्षयेत्।।

अस्य श्रीआसनमहामन्त्रस्य पृथिव्या मेरुपृष्ठऋषिः सुतलं छन्दः कूर्मो देवता आसने विनियोगः —

**पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।**
**त्वं च धारय मां देवि पवित्रं कुरु चासनम् ।।**

**योगासनाय नमः। वीरासनाय नमः। शरासनाय नमः।। श्रीं ह्रीं क्लीं आधारशक्तिकमलासनाय नमः।** (इति पुष्पाक्षतैः आसनमभ्यर्च्य आसने उपविशेत्)

**ॐ श्रीं ह्रीं क्लीं रक्तद्वादशशक्तियुक्ताय द्वीपनाथाय नमः।।** (इति भूमौ पुष्पाञ्जलिं विकिरेत्)।।

**ॐ श्रीं ह्रीं क्लीं समस्तगुप्तप्रकटसिद्धयोगिनीचक्रश्रीपादुकाभ्यो नमः।।** (इति मूर्ध्नि बद्धाञ्जलिः)

**ॐ श्रीं ह्रीं क्लीं ऐं ह्रः अस्त्राय फट्**—इति अस्त्रमन्त्रेण मुहुरावृत्तेन अङ्गुष्ठादिकनिष्ठिकान्तं करतलयोः कूर्परयोः देहे च व्यापकं कुर्यात्।।

## *दीपपूजा*

(स्वदक्षभागे गन्धपुष्पाक्षतादीन् निधाय दीपानभितः प्रज्वाल्य)।

**घृतदीपो दक्षिणे स्यात् तैलदीपस्तु वामतः ।**
**सितवर्तियुतो दक्षे रक्तवर्तिस्तु वामतः ।।**

(दक्षवामभागौ देवस्यैव।)

**ॐ श्रीं ह्रीं क्लीं दीपदेवि महादेवि शुभं भवतु मे सदा ।**
**यावत् पूजासमाप्तिः स्यात्तावत् प्रज्वल सुस्थिरा ।।**

(इति पुष्पाञ्जलिं दद्यात्।।)

मूलेन यन्त्रमध्ये पुष्पाञ्जलिं विकीर्य, मूलत्रिखण्डेन स्वाग्रवामदक्षकोणेषु पुष्पाञ्जलिं दद्यात्।।

## *शिखाबन्धनादि-मातृकान्यासान्तम्*

श्रीक्रमे वक्ष्यमाणप्रकारेण भूतशुद्ध्यादिमात्मनः प्राणप्रतिष्ठाञ्च विधाय विंशतिधा षोडशधा दशधा त्रिधा वा मूलेन प्राणानायम्य।

**अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः।**
**ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया ।।**

(इति मन्त्रमुच्चार्य) **युगपद्वामपार्ष्णिभूतलाघातत्रयकरास्फोटनत्रय-क्रूरदृष्ट्यावलोकनपूर्वकतालत्रयेण भौमान्तरिक्षदिव्यान् भेदावभासकान् विघ्नानुत्सारयेत्, अथ ''नमः''** (इति अङ्गुष्ठमन्त्रमुच्चरन् अङ्कुशमुद्रया शिखां बध्नीयात्)।

ततः श्रीक्रमे वक्ष्यमाणप्रकारेण मातृकान्यासं श्रीं ह्रीं क्लीं, इति त्रिबीजयोजनपूर्वकं विधाय, मूलमन्त्रस्य ऋषिदेवतादिविनियोगपूर्वकं करषडङ्गन्यासौ विधाय मूलेन त्रिर्व्यापकं कृत्वा ध्यायेत्।

## पात्रासादनम्

*वर्धनीकलशस्थापनम्*

स्वपुरतः वामभागे त्रिकोणवृत्तचतुरस्रात्मकं मण्डलं मत्स्यमुद्रया विलिख्य—मण्डलं मूलेन समभ्यर्च्य कर्पूरादिवासितजलपूरितं कलशं गन्धपुष्पाक्षतैः अलङ्कृत्य मण्डलोपरि स्थापयेत्।।

**ॐ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः।**
**मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः।।**
**कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा।।**
**ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः।।**
**अङ्गैश्च सहिताः सर्वे कलशाम्बुसमाश्रिताः।।**
**ॐ आपो वा इदँ सर्वं विश्वाभूतान्यापः प्राणा वा आपः**
**पशवः आपोऽन्नमापोऽमृतमापः सम्राडापो विराडापः**
**स्वराडापश्छन्दास्यापो ज्योतींष्यापो यजूँष्यापः**
**सत्यमापः सर्वाः देवता आपो भूर्भुवस्सुवराप ॐ।।**
**गंगे च यमुने चैव गोदावरि सरस्वति। नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु।।**
**सर्वे समुद्राः सरितस्तीर्थानि च नदा ह्रदाः। आयान्तु देवपूजार्थं दुरितक्षयकारकाः।।**

(मूलेन अष्टवारमभिमन्त्र्य धेनुमुद्रां प्रदर्श्य तज्जलेन पूजोपकरणानि आत्मानञ्च प्रोक्षयेत्)।।

## सामान्यार्घ्यविधिः

वर्धनीपात्रस्य दक्षिणतः वर्धनीपात्रगतेन जलेन बिन्दु-त्रिकोण-षट्कोण-वृत्त-चतुरस्रात्मकं मण्डलं मत्स्यमुद्रया निर्माय।।

चतुरस्रे अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च गणपतिषडङ्गैः सम्पूजयेत्।

यथा—

**ॐ श्रीं ह्रीं क्लीं ॐ गां हृदयाय नमः। हृदयशक्तिश्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं श्रीं गीं शिरसे स्वाहा। शिरःशक्तिश्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं ह्रीं गूं शिखायै वषट्। शिखाशक्तिश्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं क्लीं गैं कवचाय हुम्। कवचशक्तिश्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं ग्लौं गौं नेत्रत्रयाय वौषट्। नेत्रशक्तिश्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं गं गः अस्त्राय फट्। अस्त्रशक्तिश्रीपादुकां पूजयामि नमः।।**

षट्कोणे स्वाग्रादि प्रादक्षिण्येन—

**ॐ श्रीं ह्रीं क्लीं ॐ गां हृदयाय नमः । हृदयशक्तिश्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं श्रीं गीं शिरसे स्वाहा । शिरःशक्तिश्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं ह्रीं गूं शिखायै वषट् । शिखाशक्तिश्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं क्लीं गैं कवचाय हुम् । कवचशक्तिश्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं ग्लौं गौं नेत्रत्रयाय वौषट् । नेत्रशक्तिश्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं गं गः अस्त्राय फट् । अस्त्रशक्तिश्रीपादुकां पूजयामि नमः।।**

त्रिकोणे स्वाग्रादि प्रादक्षिण्येन—

**ॐ श्रीं ह्रीं क्लीं ॐ श्रीं ह्रीं क्लीं गं नमः।।**
**ॐ श्रीं ह्रीं क्लीं गणपतये वरवरद नमः।।**
**ॐ श्रीं ह्रीं क्लीं सर्वजनं मे वशमानय स्वाहा नमः।।**
**ॐ श्रीं ह्रीं क्लीं मूलं नमः** (बिन्दौ)।।

**ततः अस्त्राय फट्** इति सामान्यार्घ्यपात्रस्य आधारं प्रक्षाल्य,

**ॐ श्रीं ह्रीं क्लीं अं अग्निमण्डलाय धर्मप्रददशकलात्मने श्रीसिद्धलक्ष्मीसहित-श्रीमहागणपतेः सामान्यार्घ्यपात्राधाराय नमः।।** इति मण्डलोपरि संस्थाप्य।।

**ॐ श्रीं ह्रीं क्लीं अग्निं दूतं वृणीमहे होतारं विश्ववेदसं। अस्य यज्ञस्य सुक्रतुम्। रां रीं रूं रैं रौं रः रमलवरयूं अग्निमण्डलाय नमः।** (इति अग्निमण्डलं विभाव्य)। दशवह्निकलाः सम्पूजयेत्। तद्यथा—

| | |
|---|---|
| **ॐ श्रीं ह्रीं क्लीं यं धूम्रार्चिष्कलायै नमः।।** | **ॐ श्रीं ह्रीं क्लीं षं सुश्रीकलायै नमः।।** |
| **ॐ श्रीं ह्रीं क्लीं रं ऊष्माकलायै नमः।।** | **ॐ श्रीं ह्रीं क्लीं सं सुरूपाकलायै नमः।।** |
| **ॐ श्रीं ह्रीं क्लीं लं ज्वलिनीकलायै नमः।।** | **ॐ श्रीं ह्रीं क्लीं हं कपिलाकलायै नमः।।** |
| **ॐ श्रीं ह्रीं क्लीं वं ज्वालिनीकलायै नमः।।** | **ॐ श्रीं ह्रीं क्लीं ळं हव्यवाहिनीकलायै नमः।।** |
| **ॐ श्रीं ह्रीं क्लीं शं विस्फुलिङ्गिनीकलायै नमः।।** | **ॐ श्रीं ह्रीं क्लीं क्षं कव्यवाहिनीकलायै नमः।।** |

**ॐ श्रीं ह्रीं क्लीं अस्त्राय फट्** (इति क्षालितं शङ्खं गृहीत्वा)—

**ॐ श्रीं ह्रीं क्लीं उं सूर्यमण्डलायाऽर्थप्रदद्वादशकलात्मने श्रीसिद्धलक्ष्मीसहित श्रीमहागणपतेः, सामान्यार्घ्यपात्राय नमः**—इति संस्थाप्य।

**ॐ श्रीं ह्रीं क्लीं आ सत्येन रजसा वर्तमानो विवेशयन्नमृतं मर्त्यञ्च।**
**हिरण्ययेन सविता रथेनाऽऽदेवो याति भुवना विपश्यन्।**
**ॐ हां हीं हूं हैं हौं हः हमलवरयूं सूर्यमण्डलाय नमः**

(इति सूर्यमण्डलं विभाव्य द्वादश सूर्यकला: संपूजयेत्)। तद्यथा—

**ॐ श्रीं ह्रीं क्लीं कं भं तपिनीकलायै नमः।। ॐ श्रीं ह्रीं क्लीं छं दं सुषुम्नाकलायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं खं बं तापिनीकलायैनमः।। ॐ श्रीं ह्रीं क्लीं जं थं भोगदाकलायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं गं फं धूम्राकलायै नमः।। ॐ श्रीं ह्रीं क्लीं झं तं विश्वाकलायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं घं पं मरीचिकलायै नमः।। ॐ श्रीं ह्रीं क्लीं ञं णं बोधिनीकलायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं ङं नं ज्वालिनीकलायैनमः।। ॐ श्रीं ह्रीं क्लीं टं ढं धारिणीकलायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं चं धं रुचिकलायै नमः।। ॐ श्रीं ह्रीं क्लीं ठं डं क्षमाकलायै नमः।।**

**ॐ श्रीं ह्रीं क्लीं मं सोममण्डलाय कामप्रदषोडशकलात्मने श्रीसिद्धलक्ष्मीसहितमहागणपतेः सामान्यार्घ्यामृताय नमः** (इति वर्धनीसलिलमापूर्य क्षीरबिन्दुं दत्वा)।

**ॐ श्रीं ह्रीं क्लीं आप्यायस्व समेतु ते विश्वतः सोमवृष्णियं। भवावाजस्य सङ्गथे। सां सीं सूं सैं सौं सः समलवरयूं सोममण्डलाय नमः।** (इति सोममण्डलं विभाव्य षोडश सोमकला: सम्पूजयेत्)। तद्यथा—

**ॐ श्रीं ह्रीं क्लीं अं अमृताकलायै नमः।। ॐ श्रीं ह्रीं क्लीं लृं चन्द्रिकाकलायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं आं मानदाकलायै नमः।। ॐ श्रीं ह्रीं क्लीं लॄं कान्तिकलायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं इं पूषाकलायै नमः।। ॐ श्रीं ह्रीं क्लीं एं ज्योत्स्नाकलायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं ईं तुष्टिकलायै नमः।। ॐ श्रीं ह्रीं क्लीं ऐं श्रीकलायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं उं पुष्टिकलायै नमः।। ॐ श्रीं ह्रीं क्लीं ओं प्रीतिकलायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं ऊं रतिकलायै नमः।। ॐ श्रीं ह्रीं क्लीं औं अङ्गदाकलायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं ऋं धृतिकलायै नमः।। ॐ श्रीं ह्रीं क्लीं अं पूर्णाकिलायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं ॠं शशिनीकलायै नमः।। ॐ श्रीं ह्रीं क्लीं अः पूर्णामृताकलायै नमः।।**

ततस्तस्मिन् शङ्खे अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च क्रमेण षडङ्गैः (सम्पूज्य), **अस्त्राय फट्** (इति संरक्ष्य), **कवचाय हुं** (इति अवगुण्ठ्य), धेनुयोनिमुद्रे प्रदर्श्य, सप्तवारमभिमन्त्र्य, तत्सलिलपृषतैः पूजोपकरणानि आत्मानं च प्रोक्ष्य, शङ्खजलात् किञ्चिद् वर्धन्यां क्षिपेत्।।

## *विशेषार्घ्यविधिः*

सामान्यार्घ्योदकेन तद्दक्षिणतः बिन्दु-त्रिकोण-षट्कोण-वृत्त-चतुरस्रात्मकं मण्डलं मत्स्यमुद्रया विलिख्य, विन्दौ सानुस्वारं तुरीयस्वरं विलिख्य।।

चतुरस्रे प्राग्वत् षडङ्गं विन्यस्य षट्कोणे स्वाग्रकोणादिप्रादक्षिण्येन षडङ्गैरभ्यर्च्य, त्रिकोणे मूलत्रिखण्डैरभ्यर्च्य, मूलेन बिन्दुं चार्चयेत्। तद्यथा—

चतुरस्रे अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च—

**ॐ श्रीं ह्रीं क्लीं ॐ गां हृदयाय नमः । हृदयशक्तिश्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं श्रीं गीं शिरसे स्वाहा । शिरःशक्तिश्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं ह्रीं गूं शिखायै वषट् । शिखाशक्तिश्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं क्लीं गैं कवचाय हुं । कवचशक्तिश्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं ग्लौं गौं नेत्रत्रयाय वौषट् । नेत्रशक्तिश्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं गं गः अस्त्राय फट् । अस्त्रशक्तिश्रीपादुकां पूजयामि नमः।।**

ततः षट्कोणे स्वाग्रादि प्रादक्षिण्येन—

**ॐ श्रीं ह्रीं क्लीं ॐ गां हृदयाय नमः । हृदयशक्तिश्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं श्रीं गीं शिरसे स्वाहा । शिरःशक्तिश्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं ह्रीं गूं शिखायै वषट् । शिखाशक्तिश्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं क्लीं गैं कवचाय हुँम् । कवचशक्तिश्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं ग्लौं गौं नेत्रत्रयाय वौषट् । नेत्रशक्तिश्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं गं गः अस्त्राय फट् । अस्त्रशक्तिश्रीपादुकां पूजयामि नमः।।**

ततस्त्रिकोणे स्वाग्रादिप्रादक्षिण्येन—

**ॐ श्रीं ह्रीं क्लीं ॐ श्रीं ह्रीं क्लीं ग्लौं गं नमः।।**

**ॐ श्रीं ह्रीं क्लीं गणपतये वरवरद नमः।।**

**ॐ श्रीं ह्रीं क्लीं सर्वजनं मे वशमानय स्वाहा नमः।।**

**ॐ श्रीं ह्रीं क्लीं मूलं नमः** (बिन्दौ )

**अथ—ॐ श्रीं ह्रीं क्लीं अस्त्राय फट्** (इति आधारं प्रक्षाल्य)।

**ॐ श्रीं ह्रीं क्लीं अं अग्निमण्डलाय धर्मप्रददशकलात्मने श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतेः विशेषार्घ्यपात्राधाराय नमः** (इति-आधारं-संस्थाप्य)

**ॐ श्रीं ह्रीं क्लीं अग्निंदूतं वृणीमहे होतारं विश्ववेदसं। अस्य यज्ञस्य सुक्रतुम्। रां रीं रूं रैं रौं रः रमलवरयूं अग्निमण्डलाय नमः**—इति अग्निमण्डलं विभाव्य दशवह्निकलाः पूजयेत्। यथा—

**ॐ श्रीं ह्रीं क्लीं यं धूम्रार्चिष्कलायै नमः।।**

**ॐ श्रीं ह्रीं क्लीं रं ऊष्माकलायै नमः।।**

**ॐ श्रीं ह्रीं क्लीं लं ज्वलिनीकलायै नमः।।**

**ॐ श्रीं ह्रीं क्लीं वं ज्वालिनीकलायै नमः।।**

**ॐ श्रीं ह्रीं क्लीं शं विस्फुलिङ्गिनीकलायै नमः।।**

**ॐ श्रीं ह्रीं क्लीं षं सुश्रीकलायै नमः।।**

**ॐ श्रीं ह्रीं क्लीं सं सुरूपाकलायै नमः।।**

**ॐ श्रीं ह्रीं क्लीं हं कपिलाकलायै नमः।।**

**ॐ श्रीं ह्रीं क्लीं ळं हव्यवाहिनीकलायै नमः।।**

**ॐ श्रीं ह्रीं क्लीं क्षं कव्यवाहिनीकलायै नमः।।**

ततः— **ॐ श्रीं ह्रीं क्लीं अस्त्राय फट्** (इति मन्त्रेण विशेषार्घ्यपात्रं प्रक्षाल्य)

**ॐ श्रीं ह्रीं क्लीं ॐ सूर्यमण्डलाय अर्थप्रदद्वादशकलात्मने श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतेः विशेषार्घ्यपात्राय नमः** (इति आधारोपरि संस्थाप्य)।

**ॐ श्रीं ह्रीं क्लीं ऐं श्रीमहालक्ष्मीश्वरि परमस्वामिनि ऊर्ध्वशून्यप्रवाहिनि सोमसूर्याग्निभक्षिणि परमाकाशभासुरे आगच्छागच्छ विश विश पात्रं प्रतिगृह्ण प्रतिगृह्ण हुं फट् स्वाहा** (इति पुष्पाञ्जलिं विकीर्य)।।

**ॐ श्रीं ह्रीं क्लीं आ सत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च। हिरण्ययेन सविता रथेनाऽऽदेवो याति भुवनानि पश्यन्। हां हीं हूं हैं हौं हः हमलवरयूं सूर्यमण्डलाय नमः** (इति सूर्यमण्डलं विभाव्य द्वादश सूर्यकलाः पूजयेत्)। यथा—

**ॐ श्रीं ह्रीं क्लीं कं भं तपिनीकलायै नमः।। ॐ श्रीं ह्रीं क्लीं छं दं सुषुम्नाकलायै नमः।।**

**ॐ श्रीं ह्रीं क्लीं खं बं तापिनीकलायैनमः।। ॐ श्रीं ह्रीं क्लीं जं थं भोगदाकलायै नमः।।**

**ॐ श्रीं ह्रीं क्लीं गं फं धूम्राकलायै नमः।। ॐ श्रीं ह्रीं क्लीं झं तं विश्वाकलायै नमः।।**

**ॐ श्रीं ह्रीं क्लीं घं पं मरीचिकलायै नमः।। ॐ श्रीं ह्रीं क्लीं ञं णं बोधिनीकलायै नमः।।**

**ॐ श्रीं ह्रीं क्लीं ङं नं ज्वालिनीकलायैनमः।। ॐ श्रीं ह्रीं क्लीं टं ढं धारिणीकलायै नमः।।**

**ॐ श्रीं ह्रीं क्लीं चं धं रुचिकलायै नमः।। ॐ श्रीं ह्रीं क्लीं ठं डं क्षमाकलायै नमः।।**

**ॐ श्रीं ह्रीं क्लीं मं सोममण्डलाय कामप्रदषोडशकलात्मने श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतेः विशेषार्घ्यामृताय नमः**—इति तत्त्वमुद्रया अकारादिक्षकारान्तं क्षकाराद्यकारान्तं मातृकया अर्पितेनामृतेन आपूर्य अष्टगन्धलोलितं पुष्पं निधाय नागरखण्डं निक्षिप्य।।

**ॐ श्रीं ह्रीं क्लीं आप्यायस्व समेतु ते विश्वतः सोमवृष्णियम्। भवावाजस्य सङ्गथे।। सां सीं सूं सैं सौं सः समलवरयूं सोममण्डलाय नमः—**

इति सोममण्डलं विभाव्य षोडशसोमकलाः पूजयेत्। यथा—

**ॐ श्रीं ह्रीं क्लीं अं अमृताकलायै नमः।। ॐ श्रीं ह्रीं क्लीं लृं चन्द्रिकाकलायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं आं मानदाकलायै नमः।। ॐ श्रीं ह्रीं क्लीं लॄं कान्तिकलायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं इं पूषाकलायै नमः।। ॐ श्रीं ह्रीं क्लीं एं ज्योत्स्नाकलायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं ईं तुष्टिकलायै नमः।। ॐ श्रीं ह्रीं क्लीं ऐं श्रीकलायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं उं पुष्टिकलायै नमः।। ॐ श्रीं ह्रीं क्लीं ओं प्रीतिकलायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं ऊं रतिकलायै नमः।। ॐ श्रीं ह्रीं क्लीं औं अङ्गदाकलायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं ऋं धृतिकलायै नमः।। ॐ श्रीं ह्रीं क्लीं अं पूर्णाकलायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं ॠं शशिनीकलायै नमः।। ॐ श्रीं ह्रीं क्लीं अः पूर्णामृताकलायै नमः।।**

ततः, **ॐ श्रीं ह्रीं क्लीं ॐ जूं सः स्वाहा।** (इति अष्टवारमभिमन्त्र्य)।।

तत्रार्घ्यामृते स्वाग्राद्यप्रादक्षिण्येन अकथादिषोडशवर्णात्मकरेखात्रयं त्रिकोणं विलिख्य, तदन्तः स्वाग्रादिकोणेषु अप्रादक्षिण्येन हलक्षान् बहिःप्रादक्षिण्येन महागणपतिमूलखण्डत्रयं बिन्दौ सबिन्दुतुरीयस्वरम्, तद्वामदक्षयोः क्रमेण हंसः इति विलिख्य—

**ॐ श्रीं ह्रीं क्लीं हंसः नमः** (इति आराध्य) **त्रिकोणस्य परितः वृत्तं तद्बहिश्च षट्कोणं निर्माय स्वाग्रकोणादिप्रादक्षिण्येन षडङ्गमन्त्रैः षट्कोणमभ्यर्च्य।**

**ॐ श्रीं ह्रीं क्लीं मूलं तां चिन्मयीं आनन्दलक्षणाममृतकलशपिशितहस्तद्वयां प्रसन्नां देवीम पूजयामि नमः स्वाहा** (इति सुधादेवीं समभ्यर्च्य) तदर्घ्यात् किञ्चित् पात्रान्तरेण,

**ॐ श्रीं ह्रीं क्लीं वषट्** । इति उद्धृत्य
**ॐ श्रीं ह्रीं क्लीं स्वाहा** । इति तत्रैव निक्षिप्य
**ॐ श्रीं ह्रीं क्लीं हुँम्** । इति अवगुण्ठ्य
**ॐ श्रीं ह्रीं क्लीं वौषट्** । इति धेनुमुद्रया अमृतीकृत्य
**ॐ श्रीं ह्रीं क्लीं फट्** । इति संरक्ष्य
**ॐ श्रीं ह्रीं क्लीं नमः**। इति पुष्पं दत्वा
**ॐ श्रीं ह्रीं क्लीं मूलेन गालिन्या निरीक्ष्य**
**ॐ श्रीं ह्रीं क्लीं ऐं इति योनिमुद्रया नत्वा**

श्रीं ह्रीं क्लीं मूलेन सप्तवारमभिमन्त्र्य सुधादेवीं षोडशोपचारैः सम्पूज्य। तद्बिन्दुभिः सपर्यासाधनानि प्रोक्ष्य। सर्वं महागणपतिमयं विभावयेत्।।

ततः विशेषार्घ्यपात्रं करेण संस्पृश्य वक्ष्यमाणगणपतिगायत्र्या ऋचा च अभिमन्त्रयेत्—

**ॐ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्तिः प्रचोदयात् ।।**
**गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।**
**जेष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ।।**
(श्रीक्रमोक्तचतुर्नवतिमन्त्राद्यभिमन्त्रणमत्र नास्ति) ।।

विशेषार्घ्यपात्रस्याधः त्रिकोण-वृत्त-चतुरस्रात्मकं मण्डलद्वयं विलिख्य, प्रथममण्डले—

**ॐ श्रीं ह्रीं क्लीं हंसः शिवः सोहं सोहं हंसश्शिवः, हंसश्शिवस्सोहं नमः।**
इत्यभ्यर्च्य, गुरुपात्रं निधाय। द्वितीयमण्डले—

**ॐ श्रीं ह्रीं क्लीं हंसः नमः।** इत्यभ्यर्च्य आत्मपात्रं निधाय। ततः विशेषार्घ्यामृतात् किंचित् गुरुपात्रे उद्धृत्य गुरुत्रयं यजेत्। पुनः आत्मपात्रे तं विशेषार्घ्यामृतमुद्धृत्य, मूलाधारे बालाग्रमात्रं अनादिवासनारूपेन्धनप्रज्वलितं कुण्डलिन्यधिष्ठितचिदग्निमण्डलं ध्यात्वा,

**श्रीं ह्रीं क्लीं कुण्डलिन्यधिष्ठितचिदग्निमण्डलाय नमः।** (इति मनसा सम्पूज्य),

## *तत्त्वशोधनम्*

**ॐ श्रीं ह्रीं क्लीं मूलं पुण्यं जुहोमि स्वाहा**
**ॐ श्रीं ह्रीं क्लीं मूलं पापं जुहोमि स्वाहा ॐ श्रीं ह्रीं क्लीं मूलं विकल्पं जुहोमि स्वाहा**
**ॐ श्रीं ह्रीं क्लीं मूलं कृत्यं जुहोमि स्वाहा ॐ श्रीं ह्रीं क्लीं मूलं धर्मं जुहोमि स्वाहा**
**ॐ श्रीं ह्रीं क्लीं मूलं अकृत्यं जुहोमि स्वाहा ॐ श्रीं ह्रीं क्लीं मूलं अधर्मं जुहोमि स्वाहा**
**ॐ श्रीं ह्रीं क्लीं मूलं सङ्कल्पं जुहोमि स्वाहा ॐ श्रीं ह्रीं क्लीं मूलं अधर्मं जुहोमि वौषट्**

**ॐ श्रीं ह्रीं क्लीं इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतः जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा**—इति पूर्णाहुतिं विभाव्य—

**ॐ श्रीं ह्रीं क्लीं आर्द्रं ज्वलति ज्योतिरहमस्मि।**
**ज्योतिर्ज्वलति ब्रह्माहमस्मि।**
**योऽहमस्मि ब्रह्माहमस्मि।**
**अहमस्मि ब्रह्माहमस्मि।**
**अहमेवाहं मां जुहोमि स्वाहा।।**

(इति आत्मनः कुण्डलिनीरूपे चिदग्नौ होमबुद्ध्या जुहुयात्) विशेषार्घ्यपात्रात् किञ्चित् क्षीरं कारणकलशे निक्षिपेत्।।

## *पीठे प्राणप्रतिष्ठा*

पुरतो रक्तचन्दनादिभिः निर्मिते पीठे कलधौतादिविरचितां महागणपतिप्रतिमां वा ध्यानोक्तरूपां चतुरस्राष्टदलषट्त्रिकोणात्मकं सिन्दूरादिना लिखितं लेखितं वा यन्त्रं धातुमयं वा निवेश्य—

**श्रीगणेशयन्त्रस्य प्राणा इह प्राणाः, श्रीगणेशयन्त्रस्य जीव इह स्थितः, श्रीगणेशयन्त्रस्य सर्वेन्द्रियाणि श्रीगणेशयन्त्रस्य वाङ्मनः प्राणाः इह आयान्तु स्वाहा।।** (इति मन्त्रेण प्राणप्रतिष्ठां विदध्यात्)।।

## *पीठशक्तिपूजा*

यन्त्रस्य त्रिकोणे स्वाग्रादि प्रादक्षिण्येन परितो मध्ये च क्रमेण—

**ॐ श्रीं ह्रीं क्लीं तीव्रायै नमः।। ॐ श्रीं ह्रीं क्लीं उग्रायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं ज्वालिन्यै नमः।। ॐ श्रीं ह्रीं क्लीं तेजोवत्यै नमः।।**
**ॐ श्रीं ह्रीं क्लीं नन्दायै नमः।। ॐ श्रीं ह्रीं क्लीं सत्यायै नमः।।**
**ॐ श्रीं ह्रीं क्लीं भोगदायै नमः।। ॐ श्रीं ह्रीं क्लीं विघ्ननाशिन्यै नमः।।**
**ॐ श्रीं ह्रीं क्लीं कामरूपिण्यै नमः।।**

(इति नवगणेशपीठशक्तीरभ्यर्च्य)।।

## *धर्माद्यष्टकपूजा*

तत्रैव आग्नेयादिविदिक्षु प्रागादि दिक्षु च क्रमेण

**ॐ श्रीं ह्रीं क्लीं ऋं धर्माय नमः।। ॐ श्रीं ह्रीं क्लीं ऋं अधर्माय नमः।।**
**ॐ श्रीं ह्रीं क्लीं ऋं ज्ञानाय नमः।। ॐ श्रीं ह्रीं क्लीं ऋं अज्ञानाय नमः।।**
**ॐ श्रीं ह्रीं क्लीं लृं वैराग्याय नमः।। ॐ श्रीं ह्रीं क्लीं लृं अवैराग्याय नमः।।**
**ॐ श्रीं ह्रीं क्लीं लृं ऐश्वर्याय नमः।। ॐ श्रीं ह्रीं क्लीं लृं अनैश्वर्याय नमः।।**

(इति-अर्चयेत्)

## अन्तर्यागः

द्वादशान्ते सहस्रदलकमलकर्णिकामध्ये निविष्टगुरुचरणयुगलविगलदमृतरसविसरपरिप्लुताखिलाङ्गो हृदयकमलमध्ये ज्वलन्तमुद्यदरुणकोटिपाटलमशेषदोषगिर्वेषभूतमनेकपाननं पुर्यष्टकाकारं साङ्गं सावरणं भक्तानुग्रहार्थं तेजोरूपेण परिणतं प्रापय्य ब्रह्मरन्ध्रं बृहन्नासापुटेन निर्गमय्य त्रिखण्डामुद्रामण्डितशिखण्डे कुसुमाञ्जलौ हस्ते समानीय—

**ऐक्षवे जलधौ द्वीपे नवरत्नमये शुभे । तत्तरङ्गोल्लसत्तोयैर्धौते शीततलेऽमले ।।१।।**
**तत्तोयकणसम्पृक्तगंधवाहनिषेविते । कल्पपादपसंशोभिभूभागसमलङ्कृते ।।२।।**
**नानाकुसुमसङ्कीर्णे नानापक्षिविराजिते । अनेकफलसङ्कीर्णे भाविते वाप्सरोगणैः।।३।।**
**उद्यद्बालातपोद्योतिचन्द्रज्योत्स्नासमाकुले । विलसत्पद्मरागौघकुट्टिमारुणभूतले ।।४।।**
**कल्पपादपपुष्पस्थषट्पदस्वनमञ्जुले । पारिजातं कल्पतरुं तस्य मध्ये विचिन्तयेत् ।।५।।**
**युगपद्ऋतुषट्केन सेवितं पुष्पशोभितम् । नवरत्नमयं तस्याऽधस्तात् सिंहासनं स्मरेत्।।६।।**
**तन्मध्ये लिपिपद्मं च षडस्रं तस्य मध्यतः । कर्णिकायां त्रिकोणं च तत्संस्थं च महाग्रणम्।।७।।**
**नानारत्नविभूषाढ्यं-एकदन्तं गजाननम् । बीजापूरगदाचापशूलचक्राम्बुजान्यपि ।।८।।**
**पाशोत्पले च व्रीह्यग्रं स्वदन्तं रत्नपात्रकम् । धारयन्तं दशभुजैः भक्ताभीष्टप्रदायकम् ।।९।।**
**सर्वाङ्गभूषोज्वलया पद्मसंशोभिहस्तया । आश्लिष्टवामपार्श्वं च देव्या वल्लभया सदा।।१०।।**
**विघ्नेशं विघ्नहर्तारं फुल्लपद्माभविग्रहम् । पुष्करोद्धृतरत्नौघमयकुम्भमुखस्रुतात् ।।११।।**
**मणिमुक्ताप्रवालादीन् वर्षन्तं धारया मुहुः । सर्वतः साधकस्याग्रे स्वदानजललोलुपान् ।।१२।।**
**षट्पदालीन् कर्णतालैः वारयन्तं मुहुर्मुहुः । अमरासुरसंसेव्यं सद्रत्नमुकुटोज्ज्वलम् ।।१३।।**
**उरूदरं गजमुखं नानाभरणभूषितम् । इति ध्यात्वा गणपतिं यजेत् सर्वोपचारकैः।।१४।।**
**बीजापूरगदेक्षुकार्मुकरुजा चक्राब्जपाशोत्पलव्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः।**
**ध्येयो वल्लभया सपद्मकरयाश्लिष्टोज्ज्वलद्भूषया विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नेश इष्टार्थदः १५।।**

(इति ध्यात्वा)

गणानां त्वेति मन्त्रेण मूलमन्त्रेण च अस्मिन् यन्त्रे (बिम्बे वा)

**श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतिं साङ्गम् सपरिवारम् सावरणम् आवाहयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं मूलं आवाहितो भव ।। ॐ श्रीं ह्रीं क्लीं मूलं सम्मुखो भव।।**
**ॐ श्रीं ह्रीं क्लीं मूलं संस्थापितो भव ।। ॐ श्रीं ह्रीं क्लीं मूलं अवकुण्ठितो भव।।**
**ॐ श्रीं ह्रीं क्लीं मूलं सन्निधापितो भव ।। ॐ श्रीं ह्रीं क्लीं मूलं सुप्रसन्नो भव।।**
**ॐ श्रीं ह्रीं क्लीं मूलं सन्निरुद्धो भव ।। ॐ श्रीं ह्रीं क्लीं मूलं वरदो भव।।**

**स्वामिन् सर्वजगन्नाथ यावत्पूजावसानकम् ।**
**तावत्त्वं प्रीतिभावेन यन्त्रेऽस्मिन् सन्निधिं कुरु (बिम्बेऽस्मिन्) ।।**

इति मन्त्रैरावाहनादि-षट्मुद्राः प्रदर्श्य, वन्दनधेनुयोनिमुद्राश्च प्रदर्शयेत्। अथ हृदयादि-षडङ्गमुद्राश्च प्रदर्शयेत्।।

**महागणपतिप्रियपाशादि-सप्तमुद्राः प्रदर्शयेत् ।।**

## षोडशोपचारपूजा

(श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतिदेवतायाः षोडशोपचारानाचरेत्)।

**ॐ श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये पाद्यं कल्पयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये अर्घ्यं कल्पयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये आचमनीयं कल्पयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये स्नानम्* कल्पयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये वस्त्रोत्तरीयम् कल्पयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये भूषणम् कल्पयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये गन्धम् कल्पयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये पुष्पम् कल्पयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये धूपम् कल्पयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये दीपम् कल्पयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये नैवेद्यम् कल्पयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये ताम्बूलम् कल्पयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये नीराजनम् कल्पयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये प्रदक्षिणाः कल्पयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये नमस्कारान् कल्पयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं दन्त-पाश-अङ्कुश-विघ्न-परशु-लड्डुक-बीजापूराह्वयाः सप्तमुद्राः गणेशस्य प्रिया मताः।।**

।।इति सप्तमुद्राः प्रदर्शयेत्।।

---

स्नानसमये दुग्ध-पञ्चामृत-मधु-फलरसादिना अभिषिञ्चेत्, / पुरुष-सूक्तगणपत्युपनिषद् गणपतिगायत्र्यादिवेदमन्त्रान् उच्चरेत्।

## चतुरायतनपूजा

**विष्णुशिवसूर्यदेव्याह्वयाः चतुरायतनदेवताः ।**
**आग्नेय-ईशान-नैर्ऋत-वायव्येषु तत्तन्मूलमन्त्रेण यजेत् ।।**

## *श्रीमहागणपतितर्पणम्*

(ततो मूलान्ते, श्रीमहागणपतिश्रीपादुकां पूजयामि, इति देवं दशवारं पूजयेत्) यथा—

**ॐ श्रीं ह्रीं क्लीं 'मूलं' श्रीसिद्धलक्ष्मीसहितमहागणपतिश्रीपादुकां पूजयामि नमः।**

(इति दशवारं सन्तर्पयेत्)

## *षडङ्गपूजा*

ततो देवस्याङ्गे अग्नीशासुरवायुकोणेषु मौलौ दिक्षु च—

**ॐ श्रीं ह्री क्लीं ॐ गां हृदयाय नमः । हृदयशक्तिश्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं श्रीं गीं शिरसे स्वाहा । शिरःशक्तिश्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं ह्रीं गूं शिखायै वषट् । शिखाशक्तिश्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं क्लीं गैं कवचाय हुँम् । कवचशक्तिश्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं ग्लौं गौं नेत्रत्रयाय वौषट् । नेत्रशक्तिश्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं गं गः अस्त्राय फट् । अस्त्रशक्तिश्रीपादुकां पूजयामि नमः।।**

## *गुरुमण्डलार्चनम्*

देवस्य पश्चात् प्रागपवर्गरेखात्रये दक्षिणसंस्था क्रमेण गुर्वोघत्रयं यजेत्।।

यथा—

### *दिव्यौघः*

**ॐ श्रीं ह्रीं क्लीं विनायकसिद्धाचार्य-श्रीपादुकां पूजयामि नमः ।।**
**ॐ श्रीं ह्रीं क्लीं कवीश्वरसिद्धाचार्य-श्रीपादुकां पूजयामि नमः ।।**
**ॐ श्रीं ह्रीं क्लीं विरूपाक्षसिद्धाचार्य-श्रीपादुकां पूजयामि नमः ।।**
**ॐ श्रीं ह्रीं क्लीं विश्वसिद्धाचार्य-श्रीपादुकां पूजयामि नमः ।।**

ॐ श्रीं ह्रीं क्लीं ब्रह्मण्यसिद्धाचार्य-श्रीपादुकां पूजयामि नमः ।।
ॐ श्रीं ह्रीं क्लीं निधीशसिद्धाचार्य-श्रीपादुकां पूजयामि नमः ।।

## *सिद्धौघः*

ॐ श्रीं ह्रीं क्लीं राजाधिराजसिद्धाचार्य-श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं वरप्रदसिद्धाचार्य-श्रीपादुकां पूजयामि नमः।।

## *मानवौघः*

ॐ श्रीं ह्रीं क्लीं विजयसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं दुर्जयसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं जयसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं दुःखारिसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं सुखावहसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं परमात्मसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं सर्वभूतात्मसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं महानन्दसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं फालचन्द्रसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं सद्योजातसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं बुद्धसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं शूरसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।

### दिव्योघपाठान्तरम्

ॐ श्रीं ह्रीं क्लीं बिनायकसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं विरूपाक्षसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं बुद्धसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं शूरसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं वरप्रदसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।

### सिद्धौघपाठान्तरम्

ॐ श्रीं ह्रीं क्लीं विजयसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं दुर्जयसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।

ॐ श्रीं ह्रीं क्लीं जयसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं कवीश्वरसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं ब्रह्मण्यसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं निधीशसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।

मानवौघपाठान्तरम

ॐ श्रीं ह्रीं क्लीं राजाधिराजसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं दुःखारिसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं सद्योजातसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं सुखावहसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं परमात्मसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं सर्वभूतात्मसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं महानन्दसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं शुभानन्दसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।
ॐ श्रीं ह्रीं क्लीं फालचन्द्रसिद्धाचार्य श्रीपादुकां पूजयामि नमः।।

(गुर्वोघत्रयसंख्या विंशतिः)

ततः परमेष्ठिगुरुमन्त्रेण परमेष्ठिगुरुं, परमगुरुमन्त्रेण परमगुरुं, स्वगुरुमत्रेण स्वगुरुं च यजेत्।।

## *आवरणदेवता-ध्यानम्*

त्रिकोणबाह्ये पूर्वादिचतुर्दिक्षु समर्चयेत् । अग्रस्थबिल्ववृक्षाधः श्रियं श्रीपतिमर्चयेत् ।।
पद्मायुधधरा पद्मा शङ्खचक्रधरो हरिः । दक्षिणे वटवृक्षाधः गौरीं गौरीपतिं यजेत् ।।
पाशाङ्कुशधरा गौरी टङ्कशूलधरो हरः । पश्चिमे पिप्पलस्याधो रतिं रतिपतिं यजेत् ।।
रतिरुत्पलहस्ताढ्या कोदण्डास्त्रधरः स्मरः । सौम्ये प्रियङ्गुवृक्षाधः महापोत्रिणमर्चयेत् ।।
शूकव्रीह्यग्रहस्ता भूर्गदाचक्रधरःपतिः । षट्कोणेषु च सम्पूज्या आमोदाद्याः प्रियान्विताः।
आमोदं सिद्धिसहितमग्रकोणे प्रपूजयेत् । समृद्ध्या युक्तमभ्यर्च्य प्रमोदं वह्निकोणके ।।
सुमुखं कान्तिसंयुक्तमीशकोणे समर्चयेत् । दुर्मुखं मदनावत्या यजेद्वरुणकोणके ।।
विघ्नं मदद्रवायुक्तं कोणे नैशाचरे यजेत् । वायव्ये विघ्नकर्तारं द्राविण्या सह संयजेत् ।।

**पाशाङ्कुशाभयाऽभीष्टधारिणोऽरुणविग्रहाः । गण्डभित्तिगलद्दानपूरधौतमुखाम्बुजाः ।।**
**विघ्नस्तत्प्रमदास्सर्वाः मदाघूर्णितलोचनाः । एकहस्तधृताम्भोजाः इतरालिङ्गितप्रियाः ।।**
**षट्कोणपार्श्वयोः पूज्यौ शङ्खपद्मनिधी क्रमात् । निजप्रियाभ्यां सहितौ सर्वाभरणभूषितौ ।।**
**केशरेष्वङ्गपूजा स्यात् ब्राह्म्याद्याः पत्रमध्यगाः । बहिर्लोकेश्वराः पूज्याः वज्रादीनि यथाक्रमम् ।।**

## *आवरणपूजा*

### प्रथमावरणम्

त्र्यस्रषडस्रोरन्तराले प्रागादिदिक्षु क्रमेण—

**ॐ श्रीं ह्रीं क्लीं श्रीश्रीपति- श्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं गिरिजागिरिजापति श्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं रतिरतिपति श्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं महीमहीपति श्रीपादुकां पूजयामि नमः।।**

एताः प्रथमावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः। (इति पुष्पं दत्वा)। मूलेन देवं त्रिः सन्तर्प्य, पञ्चोपचारं कृत्वा ।

**श्रीं ह्रीं क्लीं अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।**
**भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ।।**

(इति सामान्यार्घ्योदकेन देवताहस्ते पूजां समर्प्य)

अनेन प्रथमावरणार्चनेन भगवान् श्रीमहागणपतिः प्रीयताम् ।

(इति योनिमुद्रया प्रणमेत्)

### द्वितीयावरणम्

(षडस्रे देवाग्रकोणमारभ्य प्रादक्षिण्येन तद्दक्षवामपार्श्वयोश्च क्रमेण यजेत्)

**ॐ श्रीं ह्रीं क्लीं ऋद्ध्यामोद श्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं समृद्धिप्रमोद श्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं कान्तिसुमुख श्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं मदनावतीदुर्मुख श्रीपादुकां पूजयामि नमः।।**
**ॐ श्रीं ह्रीं क्लीं मदद्रवा-अविघ्न श्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं द्राविणीविघ्नकर्तृ श्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं वसुधाराशङ्खनिधि श्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं वसुमतीपद्मनिधि श्रीपादुकां पूजयामि नमः।।**

एता द्वितीयावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः।। इति पुष्पं दत्वा।। मूलेन देवं त्रिः सन्तर्प्य, पञ्चोपचारं कृत्वा।

**श्रीं ह्रीं क्लीं अभीष्टसिद्धिं मे देहि शरणागतवत्सल।**

**भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम्।।**

(इति सामान्यार्घ्योदकेन देवताहस्ते पूजां समर्प्य)

**अनेन द्वितीयावरणार्चनेन भगवान् श्रीमहागणपतिः प्रीयताम्।**

(इति योनिमुद्रया प्रणमेत्)

## तृतीयावरणम्

षडस्रसन्धिषट्के प्राग्वत् षडङ्गदेवताऽर्चनम्।

**ॐ श्रीं ह्रीं क्लीं ॐ गां हृदयशक्ति- श्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं श्रीं गीं शिरःशक्ति श्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं ह्रीं गूं शिखाशक्ति श्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं क्लीं गैं कवचशक्ति श्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं ग्लौं गौं नेत्रशक्ति श्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं गं गः अस्त्रशक्ति श्रीपादुकां पूजयामि नमः।।**

एतास्तृतीयावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः।। इति पुष्पं दत्वा। मूलेन देवं त्रिः सन्तर्प्य। पञ्चोपचारं कृत्वा

**श्रीं ह्रीं क्लीं अभीष्टसिद्धिं मे देहि शरणागतवत्सल।**

**भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम्।।**

इति सामान्यार्घ्योदकेन देवताहस्ते पूजां समर्प्य—

**अनेन तृतीयावरणार्चनेन भगवान् श्रीमहागणपतिः प्रीयताम्।**

(इति योनिमुद्रया प्रणमेत्)

## तुरीयावरणम्

अष्टदले पश्चिमादि दिक्षु वायव्यादि विदिक्षु च प्रादक्षिण्यक्रमेण—

**ॐ श्रीं ह्रीं क्लीं आं ब्राह्मी- श्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं ईं माहेश्वरी श्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं ऊं कौमारी श्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं ॠं वैष्णवी श्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं ॡं वाराही श्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं ऐं माहेन्द्री श्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं औं चामुण्डा श्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लींअः महालक्ष्मी श्रीपादुकां पूजयामि नमः।।**

एतास्तुरीयावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः संतुष्टाः सन्तु नमः।। इति पुष्पं दत्वा।। मूलेन देवं त्रिः सन्तर्प्य पञ्चोपचारं कृत्वा।

**ॐ श्रीं ह्रीं क्लीं अभीष्ट सिद्धिं मे देहि शरणागत वत्सल।**

**भक्त्या समर्य मे तुभ्यं तुरीयावरणार्चनम्।**

(इति सामान्यार्घ्योदकेन देवताहस्ते पूजां समर्प्य)—

**अनेन तुरीयावरणार्चनेन भगवान् श्रीमहागणपतिः प्रीयताम्।**

(इति योनिमुद्रया प्रणमेत्)

## पञ्चमावरणम्

अथ चतुरश्रस्य रेखायां प्रागाद्यासु अष्टसु दिक्षु क्रमेण—

**ॐ श्रीं ह्रीं क्लीं लां इन्द्राय वज्रहस्ताय सुराधिपतये ऐरावतवाहनाय सपरिवाराय नमः, इन्द्रश्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं रां अग्नये शक्तिहस्ताय तेजोऽधिपतये अजवाहनाय सपरिवाराय नमः, अग्निश्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं टां यमाय दण्डहस्ताय प्रेताधिपतये महिषवाहनाय सपरिवाराय नमः, यमश्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं क्षां निर्ऋतये खड्गहस्ताय रक्षोऽधिपतये नरवाहनाय सपरिवाराय नमः, निर्ऋतिश्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं वां वरुणाय पाशहस्ताय जलाधिपतये मकरवाहनाय सपरिवाराय नमः, वरुणश्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं यां वायवे ध्वजहस्ताय प्राणाधिपतये रुरुवाहनाय सपरिवाराय नमः, वायुश्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं सां सोमाय शङ्खहस्ताय नक्षत्राधिपतये अश्ववाहनाय सपरिवाराय नमः, सोमश्रीपादुकां पूजयामि नमः।।**

**ॐ श्रीं ह्रीं क्लीं हां ईशानाय त्रिशूलहस्ताय विद्याऽधिपतये वृषभवाहनाय सपरिवाराय नमः, ईशानश्रीपादुकां पूजयामि नमः।।**

**एताः पञ्चमावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः।।** इति पुष्पं दत्वा। **मूलेन देवं त्रिः सन्तर्प्य पञ्चोपचारं कृत्वा।**

**ॐ श्रीं ह्रीं क्लीं अभीष्टसिद्धिं मे देहि शरणागतवत्सल।**
**भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम्।।**

(इति सामान्यार्घ्योदकेन देवताहस्ते पूजां समर्प्य)

**अनेन पञ्चमावरणार्चनेन भगवान् श्रीमहागणपतिः प्रीयताम्।**

(इति योनिमुद्रया प्रणमेत्)।।

*पुनः मूलेन दशवारं सन्तर्पयेत्*

**ॐ श्रीं ह्रीं क्लीं 'मूलं' श्रीसिद्धलक्ष्मीसहित-श्रीमहागणपति-श्रीपादुकां पूजयामि नमः।।**

(इति दशवारं सन्तर्पयेत्)।।

## षोडशनामार्चनम्

**ॐ श्रीं ह्रीं क्लीं सुमुखाय नमः।। ॐ श्रीं ह्रीं क्लीं लम्बोदराय नमः।।**
**ॐ श्रीं ह्रीं क्लीं एकदन्ताय नमः।। ॐ श्रीं ह्रीं क्लीं विकटाय नमः।।**
**ॐ श्रीं ह्रीं क्लीं कपिलाय नमः।। ॐ श्रीं ह्रीं क्लीं विघ्नराजाय नमः।।**
**ॐ श्रीं ह्रीं क्लीं गजकर्णकाय नमः।। ॐ श्रीं ह्रीं क्लीं गणाधिपाय नमः।।**

| | |
|---|---|
| **ॐ श्रीं ह्रीं क्लीं धूमकेतवे नमः।।** | **ॐ श्रीं ह्रीं क्लीं वक्रतुण्डाय नमः।।** |
| **ॐ श्रीं ह्रीं क्लीं गणाध्यक्षाय नमः।।** | **ॐ श्रीं ह्रीं क्लीं शूर्पकर्णाय नमः।।** |
| **ॐ श्रीं ह्रीं क्लीं भालचन्द्राय नमः।।** | **ॐ श्रीं ह्रीं क्लीं हेरम्बाय नमः।।** |
| **ॐ श्रीं ह्रीं क्लीं गजाननाय नमः।।** | **ॐ श्रीं ह्रीं क्लीं स्कन्दपूर्वजाय नमः।।** |

पुनः पूर्वोक्तषोडशभिरुपचारैः पूजयेत्।

**श्रीं ह्रीं क्लीं श्रीमहागणपतये नमः नानाविधपरिमलपत्रपुष्पाणि दूर्वादीनि समर्पयामि।।** अथ यथावकाशं, गणपति अष्टोत्तर, महागणपति मूलमन्त्र त्रिस्त्रशती सहस्त्रनामाल्यादिनार्चनम् कूर्यात्।

## *धूपः*

**ॐ श्रीं ह्रीं क्लीं धूरसि धूर्व धूर्वन्तं धूर्वतं योऽस्मान् धूर्वति तं धूर्वयं वयं धूर्वामस्त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतममहुतमसि हविर्धानं दृँहस्व माह्वार्मित्रस्यत्वाचक्षुषा प्रेक्षे माभेर्मा संविक्था मात्वा हिँसिषम्।।**

**ॐ श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये नमः धूपमाघ्रापयामि। धूपानन्तरं आचमनीयं समर्पयामि।।**

## *दीपः*

**ॐ श्रीं ह्रीं क्लीं उद्दीप्यस्व जातवेदोपघ्नन्निर्ऋतिं मम। पशूँश्च मह्यमावह जीवनं च दिशो दिश। मानो हिँसीर्जातवेदो गामश्वं पुरुषं जगत्। अबिभ्रदग्न आगहि श्रिया मा परिपातय।।**

**ॐ श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहित-श्रीमहागणपतये नमः, दीपं दर्शयामि।** दीपानन्तरं आचमनीयं समर्पयामि।।

ततः दन्त-पाश-अङ्कुश-विघ्न-परशु—लड्डुक- बीजापूराख्याः सप्तमुद्राः प्रदर्शयेत्।।

## *नैवेद्यम्*

श्रीदेवाग्रे, चतुरस्त्रमण्डलं, सामान्यार्घ्योदकेन विधाय, तत्र आधारोपरि स्थापितं, सौवर्ण-रौप्य-कांस्यादि-स्थाली-चषकभरितं भक्ष्य-भोज्य-चोष्यलेह्यपेयात्मकं रसवद्व्यञ्जनमञ्जुलं प्राज्यकपिलाज्यं दधिदुग्धमंधु यथासम्भवं वा नैवेद्यं निधाय मूलेन निरीक्ष्य—

**ॐ श्रीं ह्रीं क्लीं ऐं ह्रः—इति अस्त्रेण प्रोक्ष्य—**

**ॐ श्रीं ह्रीं क्लीं ॐ जूं सः वौषट्**-इति सप्तवारमभिमन्त्रितजलेन प्रोक्ष्य—

**ॐ श्रीं ह्रीं क्लीं** चक्रमुद्रां प्रदर्श्य—

**ॐ श्रीं ह्रीं क्लीं यं**-इति वायुबीजेनाधोमुखवामकरेण सप्तवारं जपन् तद्गतदोषान् संशोष्य—

**ॐ श्रीं ह्रीं क्लीं रं**-इति वह्निबीजेन अधोमुखदक्षकरेण सन्दह्य—

**ॐ श्रीं ह्रीं क्लीं वं**-इति धेनुमुद्रया अमृतीकृत्य—

**ॐ श्रीं ह्रीं क्लीं** मूलेन विशेषार्घ्यबिन्दुभिः प्रोक्ष्य—

**ॐ श्रीं ह्रीं क्लीं** मूलेनं सप्तवारमभिमन्त्र्य—

**ॐ श्रीं ह्रीं क्लीं ॐ क्लीं कामदुघे अमोघे वरदे विच्चे स्फुर स्फुर श्रीं परश्रीं,**

इति कामधेनुविद्यया धेनुमुद्रयाऽमृतीकृत्य, देवस्य पाद्यम् अर्घ्यम् आचमनीयं च दत्वा—

ॐ श्रीं ह्रीं क्लीं मूलेन देवं त्रिः सन्तर्प्य—

पात्रान्तरे विशेषार्घ्यं किञ्चिद् गृहीत्वा वामाङ्गुष्ठेन नैवेद्यपात्रं स्पृशन्—

**ॐ श्रीं ह्रीं क्लीं 'मूलं' साङ्गाय सपरिवाराय सशक्तये श्रीसिद्धलक्ष्मीसहित—श्रीमहागणपतये नैवेद्यं कल्पयामि नमः**—इति नैवेद्यपरिसरे संस्थाप्य। कृताञ्जलिः —

**ॐ श्रीं ह्रीं क्लीं हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम्। पञ्चधा षड्रसोपेतं गृहाण परमेश्वर।।**

**शर्करापायसापूपघृतव्यञ्जनसंयुतम् । विचित्ररुचि नैवेद्यं हृद्यमावेदयाम्यहम्।।**

इति निवेद्य—

**ॐ भूर्भुवःस्वः + परिषिञ्चामि। अमृतोपस्तरणमसि**—इति देवतायै आपोशनं दत्वा—वामकरेण ग्रासमुद्रां प्रदर्श्य, दक्षकरेण प्राणादिपञ्चमुद्राप्रदर्शनपूर्वकं पञ्चप्राणाहुतीः कल्पयेत्। यथा—

**ॐ श्रीं ह्रीं क्लीं प्राणाय स्वाहा।। ॐ श्रीं ह्रीं क्लीं उदानाय स्वाहा।।**

**ॐ श्रीं ह्रीं क्लीं अपानाय स्वाहा।। ॐ श्रीं ह्रीं क्लीं समानाय स्वाहा।।**

**ॐ श्रीं ह्रीं क्लीं व्यानाय स्वाहा।। ॐ श्रीं ह्रीं क्लीं ब्रह्मणे स्वाहा।।**

**ॐ श्रीं ह्रीं क्लीं ॐ गं आत्मतत्त्वव्यापकः श्रीसिद्धलक्ष्मीसहित—श्रीमहागणपतिस्तृप्यतु**

**ॐ श्रीं ह्रीं क्लीं ॐ गं विद्यातत्त्वव्यापकः श्रीसिद्धलक्ष्मीसहित—श्रीमहागणपतिस्तृप्यतु**

**ॐ श्रीं ह्रीं क्लीं ॐ गं शिवतत्त्वव्यापकः श्रीसिद्धलक्ष्मीसहित—श्रीमहागणपतिस्तृप्यतु**

**ॐ श्रीं ह्रीं क्लीं ॐ गं सर्वतत्त्वव्यापकः श्रीसिद्धलक्ष्मीसहित—श्रीमहागणपतिस्तृप्यतु**

(इति किञ्चित्किञ्चित् सामान्यार्घ्योदकं दद्यात्)।

**ॐ श्रीं ह्रीं क्लीं चित्पात्रे सद्धविस्सौख्यं विविधानेकभक्षणम्।**

**निवेदयामि ते देव सानुगस्त्वं जुषाण तत्।।**

**ॐ श्रीं ह्रीं क्लीं मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः। मधुनक्तमुतोषसि मधुमत्पार्थिवँ्रजः। मधुद्यौरस्तु नः पिता। मधुमान्नो वनस्पतिर्मधुमाँ्अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः।**

(इति पुष्पाञ्जलिं विन्यस्य नैवेद्यजातं तादात्म्येन समर्पयेत्)

**ॐ श्रीं ह्रीं क्लीं नमस्ते देवदेवेश सर्वतृप्तिकरं परम्।**

**अन्र्यनिवेदितं शुद्धं प्रकृतिस्थं सुशीतलम्।।**

**अमृतानन्दसम्पूर्णं गृहाण जलमुत्तमम्।।**

**ॐ श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहित-श्रीमहागणपतये अमृतपानीयं समर्पयामि।।**

(देवं भुक्तवन्तं सुतृप्तं ध्यात्वा)

**ॐ अमृतापिधानमसि। इत्युत्तरापोशनं दत्वा—**

**ॐ श्रीं ह्रीं क्लीं हस्तप्रक्षालनं, गण्डूषं, पादप्रक्षालनम्, आचमनीयं कल्पयामि नमः।**

(ताम्रबलिपात्रे निवेदन-सामग्रीः किंचित्किंचिदादाय निवेदनपात्राणि निर्गमय्य तत्स्थलम् अस्त्रेण शोधयेत्)

## *ताम्बूलम्*

**ॐ श्रीं ह्रीं क्लीं वनस्पतिदैवत्याय ताम्बूलाय नमः।** इति सामान्यार्घ्योदकेन प्रोक्ष्य—

**ॐ श्रीं ह्रीं क्लीं तमालदलकर्पूरपूगभागसमन्वितम् ।**

**एलापत्रसुसंयुक्तं ताम्बूलं प्रतिगृह्यताम्।।**

**ॐ श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहित-श्रीमहागणपतये ताम्बूलं कल्पयामि नमः।।**

## *कुलदीपः*

**ॐ श्रीं ह्रीं क्लीं 'मूलं' – अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभम्।**

**त्रिधा दीपं परिभ्राम्य कुलदीपं निवेदये।।**

## *कर्पूरनीराजनम्*

**ॐ श्रीं ह्रीं क्लीं सोमो वा एतस्य राज्यमादत्ते। यो राजा सन्राज्यो वा सोमेन यजते। देवसुवामेतानि हवीँ्षि भवन्ति। एतावन्तो वै देवानाँ्सवाः। त एवास्मै सवान् प्रयच्छन्ति। त एनं पुनः सुवन्ते राज्याय। देवसू राजा भवति।।**

**ॐ श्रीं ह्रीं क्लीं ॐ स्वस्ति साम्राज्यं भोज्यं स्वाराज्यं वैराज्यं पारमेष्ठिकं राज्यं महाराज्यमाधिपत्यम्। न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति।**

**राजाधिराजाय प्रसह्य साहिने नमो वयं वैश्रवणाय कुर्महे। स मे कामान् कामकामाय मह्यम्। कामेश्वरो वैश्रवणो ददातु। कुबेराय वैश्रवणाय महाराजाय नमः।। महागणपतये नमः** कर्पूरनीराजनं दर्शयामि।

## *मन्त्रपुष्पम्*

**योऽपां पुष्पं वेद। पुष्पवान् प्रजावान् पशुमान् भवति ।**
**चन्द्रमा वा अपां पुष्पम् । पुष्पवान् प्रजावान् पशुमान् भवति ।**
**ॐ श्रीं ह्रीं क्लीं ॐ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्तिः प्रचोदयात्।**
**ॐ श्रीं ह्रीं क्लीं नमो नरगजाकृते नलिनवर्णदिहाकृते नरासुरेडित-श्रुतिशिरोद्यदङ्घ्रिद्वय। नगेश्वरवरात्मजानयनपद्मभानो नमो नतार्तिहरणाङ्घ्रियुक् कलित एष पुष्पाञ्जलिः।।**
**ॐ श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहित-श्रीमहागणपतये नमो** पुष्पाञ्जलिं समर्पयामि।।

## *तान्त्रिकनित्यहोमविधिः*

साधकः स्वस्तिपद्मं विरच्य तस्मिन् गणेशं साङ्गं सावरणं षोडशोपचारैः सम्पूज्य तदुत्तरतः लौकिकाग्निं प्रतिष्ठाप्य। तस्मिन्नग्नौ साङ्गं सावरणं गणपतिं सम्पूज्य अष्टद्रव्यैः मध्वाज्यमिश्रितैः ग्रासमितैः त्रिसंख्यं पञ्चसंख्यं वा जुहुयात्। संभृताष्टद्रव्यं त्रिधा कृत्वा एकमंशं निवेदयेत् द्वावंशौ जुहुयात्। ततः जपं कृत्वा गणपत्युपनिषदादिभिः स्तुवीत। पुनः पञ्चोपचारैरुपचर्य, नीराजनं प्रदक्षिणनमस्कारादि कृत्वा। अग्नेः स्वस्तिपद्मादपि गणपतिम् उद्वासयेत्। अष्टद्रव्यालाभे तु नारिकेलेन मध्वाज्यगुडमिश्रितेन यथासम्भवद्रव्येण जुहुयात्। इति नित्यहोमविधिः।

विस्तरे तु गुरूपदिष्टमार्गेण चतुष्पात्रप्रयोगेणापि होमः कर्तव्यः। तस्मिन् प्रयोगे अग्निमुखानन्तरम्, अग्नौ गणपतिमावाह्य पञ्चोपचारं कृत्वा गणपतिमूलमन्त्रेण प्रधानाहुतिं दत्वा दशवारं मूलमन्त्रेण अङ्गावरणदेवतानाम् एकैकामाज्याहुतिं जुहुयात्। ततो होमशेषः।। स्वस्वशाखोक्तविधिना अग्निप्रतिष्ठापनं कुर्यात्।।

## *गणपति-होममन्त्रः*

**ॐ श्रीं गणानां त्वा गणपतिꣳ हवामहे कविं कवीनामुपमश्रवस्तमम् ।**
**ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनः शृण्वन्नूतिभिस्सीदसादनम् ।।**

**ॐ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्तिः प्रचोदयात् ।।**

**ॐ श्रीं ह्रीं क्लीं ग्लौं गं कएईलह्रीं यदद्यकच्च वृत्रहन् हसकहलह्रीं**

**उदगा अभिसूर्या सकलह्रीं सर्वतदिन्द्र ते वशे गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा।**

**आनस्तुजं रयिं भरां षन्नः प्रतिजानते वृक्षं पक्वं फला मङ्कीव**

**धूनिहीन्द्र सं पारणं वसू य ईं राजाना वृतु धा विदथद्रजासौ मित्रा वरुणर्चा केतत्।**

**गंभीराय रक्षसे हेतिमस्य द्रोधाय चित्वचस आनवाय।**

**आनून इन्द्रक्षुमन्तं चित्रं ग्राभं शंगृमाय महाहस्ती दक्षिणेन स्वाहा।।**

**वौषट् श्रीमहागणपतये इदं न मम।।**

अथ—

निषुसदि गणपते गणेषुत्वाहु विप्रतमं कवीनां नत्रृते
त्वत् कियते किंचनारे महामर्कं मघवन् चित्रमर्च।
अभिख्यानो मघवन् नाथामानान् सखे
बोधि वसुपते वसूनां रणं कृधि रणकृत्
सत्यशुष्मा भक्ते चिदाभजा राये अस्मान्

।।इति गणपतिहोममन्त्रः।।

पादपूजा-मन्त्रः

**तद्विष्णोः परमं पदँ्सदा पश्यन्ति सूरयः।। दिवीव चक्षुराततं तद्विप्रासो विपन्यवो**

**जागृवा सँ्समिन्धते विष्णोर्यत्परमं पदं।।**

**चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि।**

**तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिन्तरेम।। लोकस्य द्वारामर्चिमत्पवित्रं ज्योतिष्मद भ्राजमानं महस्वत्।। अमृतस्य धारा बहुधा दोहमानं चरणन्नो लोके सुधिता न्ददातु।।**

## *बलिदानम्*

**देवतादक्षभागे सामान्यार्घ्योदकेन वृत्तचतुरश्रात्मकं मण्डलं परिकल्प्य श्रीं ह्रीं क्लीं ऐं व्यापकमण्डलाय नमः।** इति गन्धाक्षतैरभ्यर्च्य अर्घभक्तपूरितोदकं सक्षीरादित्रयं बलिपात्रं तत्र विन्यस्य—

**ॐ श्रीं ह्रीं क्लीं ॐ गां गीं गूं गैं गौं गः महागणपतये वरवरद सर्वजनं मे वशमानय सर्वोपचारसहितं इमं बलिं गहण गृहण स्वाहा।** इत्युच्चरन्। बलिपात्रे सामान्यार्घ्योदकं विसृजेत्। ततः पादौ प्रक्षाल्य आचम्य त्रिः प्रदक्षिणनमस्कारान् कृत्वा यथाशक्ति मूलमन्त्रजपमाचरेत्। उत्तराङ्गं विधाय—

**गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्।**
**सिद्धिर्भवतु मे देव त्वत्प्रसादान्मयि स्थिरा।।**
(इति देवस्य हस्ते जपं समर्पयेत्)।।

## *गणपतिबलिः*

वायव्यमण्डले गं गणपतये नमः गणपते इहागच्छ आगच्छ इति समावाह्य गां इत्यादिना सकलीकृत्य

**ॐ श्रीं ह्रीं क्लीं गं गणपतये नमः** इति मन्त्रेण गन्धादिदीपान्तं उपचारांत् अभ्यर्च्य—तत्र प्राग्वत् बलिपात्रं निधाय

**ॐ श्रीं ह्रीं क्लीं गं गणपतये वर वरद सर्वजनं मे वशमानय सर्वोपचारसहितं बलिं गृहण गृहण स्वाहा**

**ॐ श्रीं ह्रीं क्लीं श्रीगणपति-बलिद्रव्याय नमः** इति सम्पूज्य

इति वामाङ्गुष्ठमध्यमाभ्याम् अर्घ्योदकधारादानेन बलिम् उत्सृज्य नाराचमुद्रया बलिं ग्राहयित्वा पुष्पाञ्जलिम् आदाय

**सर्वदा सर्वकार्याणि निर्विघ्नं मम साधय।**
**शान्तिं करोतु सततं विघ्नराजः सकिङ्करः।।**
इति पुष्पाञ्जलिं दत्वा योनिमुद्रया प्रणमेत्।

।।इति गणपतिबलिः।।

## *गणेशाष्टकम्*

**अस्य श्री गणपतिस्तोत्रमालामन्त्रस्य भगवान श्री सदाशिव ऋषि उष्णिक् छन्दः। श्री गणपतिर्देवता। श्री गणपति प्रसादसिध्यर्थ जपे विनियोगः**

ध्यानम्

**चतुर्भुजं रक्ततनुं त्रिनेत्रं पाशाङ्कुशौं मोदकपात्रदन्तौ।**
**करैर्दधानं सरसीरूहस्य गणाधिनाथं शशिचूडमीडे** ।।इति।

**विनायकैकभावनासमर्चनासमर्पितं,**
**प्रमोदकैः प्रमोदकैः प्रमोदमोदमोदकम्** ।
**यदर्पितं समर्पितं नवन्यधान्यनिर्मितं,**
**न खण्डितं न खण्डितं न खण्डमण्डनं कृतम्** ।।१।।

सजातिकृद्विजातिकृत्स्वनिष्ठभेदवर्जितं
निरञ्जनं च निर्गुणं निराकृतिं च निष्क्रियम् ।
सदात्मकं चिदात्मकं सुखात्मकं परं पदं
भजामि तं गजाननं स्वमाययाऽऽत्तविग्रहम् ।।२।।
गणाधिप त्वमष्टमूर्तिरीशसूनुरीश्वरः
त्वमम्बरं च शम्बरं धनञ्जयः प्रभञ्जनः ।
त्वमेव दीक्षितः क्षितिर्निशाकरः प्रभाकरः
चराचरप्रचारहेतुरन्तरायशान्तिकृत ।।३।।
अनेकदं तमालनीलमेकदन्तसुन्दरं
गजाननं नुमो गजाननामृताब्धिमन्दिरम् ।
समस्तवेदवादसत्कलाकलापमन्दिरं
महान्तरायदुस्तमश्शमार्कमाश्रितोदरम् ।।४।।
सरत्नहेमघण्टिकानिनादनूपुरस्वनैः
मृदङ्गतालनादभेदसाधनानुरूपतः ।
धिमिद्धिमित्ततोऽङ्गतोङ्ग थेयिथेयिशब्दतो
विनायकश्शशाङ्कशेखरोऽग्रतः प्रनृत्यति ।।५।।
नमामि नाकनायकैकनायकं विनायकं
कलाकलापकल्पनानिदानमादिपूरुषम् ।
गणेश्वरं गुणेश्वरं महेश्वरात्मसम्भवं
स्वपादमूलसेविनामपारवैभवप्रदम् ।।६।।
भजे प्रचण्डतुन्दिलं सदन्तशूकभूषणं
सनन्दनादिवन्दितं समस्तसिद्धसेवितम् ।
सुरासुरौघयोस्सदा जयप्रदं भयप्रदं
समस्तविघ्नघातिनं स्वभक्तपक्षपातिनम् ।।७।।
कराम्बुजात्तकङ्कणः पदाब्जकिङ्किणीगणो
गणेश्वरो गुणार्णवः फणीश्वराङ्गभूषणः ।
जगत्त्रयान्तरायशान्तिकारकोऽस्तु तारको-
भवार्णवादनेकदुर्ग्रहाच्चिदेकविग्रहः ।।८।।
यो भक्तिप्रवणः परावरगुरोस्स्तोत्रं गणेशाष्टकं
शुद्धस्संयतचेतसा यदि पठेन्नित्यं त्रिसन्ध्यं पुमान् ।

**तस्य श्रीरतुला स्वसिद्धिसहिता श्रीशारदा सारदा**
**स्यातां तत्परिचारिके किल तदा काः कामनानां कथाः ।।**

## *सुवासिनीपूजा*

**ॐ श्रीं ह्रीं क्लीं प्राङ्निमन्त्रितां सुवासिनीमाहूय तां देवीरूपां विभाव्य ॐ श्रीं ह्रीं क्लीं ऐं क्लीं सौः सुवासिन्यै अर्घ्यं कल्पयामि नमः।** इत्यादिरीत्या अर्घ्य-आचमन-स्नान-गन्ध-हरिद्रा-कुङ्कुम-पुष्प-धूप-दीप-नैवेद्य-ताम्बूलानि दद्यात्। (सति विभवे वसनादीनि च)।।

## *वटुकपूजा*

ॐ श्रीं ह्रीं क्लीं प्राङ्निमन्त्रितवटुकममाहूय तं गणपतिरूपं विभाव्य, **ॐ श्रीं ह्रीं क्लीं वं वटुकाय अर्घ्यं कल्पयामि नमः।** इत्यादिरीत्या, अर्घ्य-आचमन-स्नान-वस्त्र-यज्ञोपवीत-गन्ध-पुष्प-धूप-दीप-नैवेद्य-ताम्बूलानि दद्यात्।।

## *सामयिकपूजा*

ततः संनिहिते गुरौ गुरुं नत्वा गन्धकुङ्कुमादिभिरुपचर्य, गुरुपादुकामन्त्रेण अभिपूज्य पात्राणि समर्पयेत्। असन्निहिते गुरौ स्वशिरसि गुरुत्रयं यजेत्। ततः सन्निहितान् सामयिकानाहूय गन्धकुङ्कुमादिभिरुपचर्य पात्राणि दद्यात्। पश्चात् तत्त्वशोधनं कुर्यात्। सामयिकाश्च पात्रमादाय समस्तप्रकटेत्यादिसमष्टिमन्त्रेण पुष्पाञ्जलिं दत्वा स्वशिरसि गुरुत्रयं, हृदये आत्मचतुष्टयं च इष्ट्वा देवं सन्तर्प्य तत्त्वशोधनं यथोपदिष्टं कुर्युः।।

## *तत्त्वशोधनम्*

**ॐ श्रीं ह्रीं क्लीं ॐ गं आत्मतत्त्वं शोधयामि स्वाहा ।।**
**ॐ श्रीं ह्रीं क्लीं ॐ गं विद्यातत्त्वं शोधयामि स्वाहा ।।**
**ॐ श्रीं ह्रीं क्लीं ॐ गं शिवतत्त्वं शोधयामि स्वाहा ।।**
**ॐ श्रीं ह्रीं क्लीं ॐ गं सर्वतत्त्वं शोधयामि स्वाहा ।।**

## *पूजासमर्पण-देवतोद्वासने*

**ॐ श्रीं ह्रीं क्लीं साधु वाऽसाधु वा कर्म यद्यदाचरितं मया ।**
**तत्सर्वं कृपया देव गृहाणाराधनं मम ।।**

**ॐ श्रीं ह्रीं क्लीं देवनाथ गुरो स्वामिन् देशिक स्वात्मनायक ।**
**त्राहि त्राहि कृपासिन्धो पूजां पूर्णतरां कुरु ।।**

इति देवतादक्षिणहस्ते पूजां समर्प्य शङ्खमुद्धृत्य देवतोपरि त्रिः परिभ्राम्य, तज्जलं हस्ते समादाय सामयिकानात्मानं च मूलेन प्रोक्ष्य शङ्खं प्रक्षाल्य निदध्यात्। ततो मूलेन तीर्थनिर्माल्ये स्वीकृत्य,

**ॐ श्रीं ह्रीं क्लीं ज्ञानतोऽज्ञानतो वापि यन्मयाचरितं विभो ।**
**तव कृत्यमिति ज्ञात्वा क्षमस्व परमेश्वर ।।**

इति क्षमाप्य, सर्वासामावरणदेवतानां देवताङ्गे विलयं विभाव्य खेचरीं बद्ध्वा—

**ॐ श्रीं ह्रीं क्लीं हृत्पद्मकर्णिकामध्ये शक्त्या सह गजानन ।।**
**प्रविश त्वं गणेशान सर्वैरावरणैः सह ।।**

इति तेजोरूपेण परिणतं देवं पूर्ववत् हृदयं नीत्वा, तत्र च मूर्तिं पञ्चोपचारैः सम्पूज्य पुनः आत्माभिन्नसंविद्रूपेण भावयेत्।।

## *शान्तिस्तवः*

**सम्पूजकानां परिपालकानां यतेन्द्रियाणां च तपोधनानाम् ।**
**देशस्य राष्ट्रस्य कुलस्य राज्ञां करोतु शान्तिं भगवान् कुलेशः ।।**
**नन्दन्तु साधककुलान्यणिमाऽऽदिसिद्धाः**
**शापाः पतन्तु समयद्विषि योगिनीनाम् ।**
**सा शाम्भवी स्फुरतु काऽपि ममाऽप्यवस्था**
**यस्यां गुरोश्चरणपङ्कजमेव लभ्यम् ।।**
**शिवाद्यवनिपर्यन्तं ब्रह्मादिस्तम्बसंयुतम् ।**
**कालाग्न्यादिशिवान्तं च जगद्यज्ञेन तृप्यतु ।।**

इत्यादिशान्तिश्लोकान् पठित्वा—

## *विशेषार्घ्योद्वासनम्*

**मूलेन विशेषार्घ्यपात्रमा मस्तकमुद्धृत्य तत्क्षीरं पात्रान्तरेणादाय आर्द्रं ज्वलती इति मन्त्रेण आत्मनः कुण्डलिन्यग्नौ हुत्वा ब्राह्मणान् सुवासिनीश्च भोजयित्वा स्वयमपि भुक्त्वा यथासुखं विहरेत्।।**

।।इति शिवम्।।

## अथ गणपत्यथर्वशीर्षम्

ॐ श्रीगणेशाय नमः।। ॐ भद्रं कर्णेभिः शृणुयाम देवाः।। भद्रं पश्येमाक्षभिर्यजत्राः।। स्थिरैरङ्गैस्तुष्टुवा ःसस्तनूभि र्व्यशेम देवहितं यदायुः।। स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।। स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः।। स्वस्तिनो बृहस्पतिर्दधातु।। ॐ शान्तिः शान्तिः शान्तिः।। अथ गणेशाथर्वशीर्षं व्याख्यास्यामः।।

ॐ नमस्ते गणपतये।। त्वमेव प्रत्यक्षं तत्त्वमसि।। त्वमेव केवलं कर्त्तासि।। त्वमेव केवलं धर्तासि।। त्वमेव केवलं हर्ताऽसि।। त्वमेव सर्वं खल्विदं ब्रह्मासि।। त्वं साक्षादात्माऽसि नित्यम्।। ऋतं वच्मि।। सत्यं वच्मि।। अवत्वंमाम्।। अव वक्तारम्।। अव श्रोतारम्।। अव दातारम्।। अव धातारम्।। अवानूचानमवशिष्यम्।। अवपश्चात्तात्।। अवपुरस्तात्।। अवोत्तरात्तात्।। अवदक्षिणात्तात्।। अवचोर्ध्वात्तात्।। अवाधरात्तात्।। सर्वतो मां पाहि पाहि समंतात्।। त्वं वाङ्मयस्त्वं चिन्मयः।। त्वमानन्दमयस्त्वं ब्रह्ममयः।। त्वंसच्चिदानन्दादद्वितीयोऽसि।। त्वं प्रत्यक्षं ब्रह्मासि।। त्वं ज्ञानमयो विज्ञानमयोऽसि।। सर्वं जगदिदं त्वत्तोजायते।। सर्वं जगदिदं त्वत्तस्तिष्ठति।। सर्वं जगदिदं त्वयि लयमेष्यति।। सर्वंजगदिदं त्वयि प्रत्येति।। त्वं भूमिरापोऽनिलोऽनलो नभः।। त्वंचत्वारि वाक्पदानि।। त्वं गुणत्रयातीतः।। त्वं कालत्रयातीतः।। त्वं देहत्रयातीतः।। त्वं मूलाधारस्थितोऽसि नित्यम्।। त्वं शक्तित्रयात्मकः।। त्वां योगिनो ध्यायन्ति नित्यम्।। त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चंद्रमास्त्वं ब्रह्म भूर्भुवःस्वरोम्।। गणादिं पूर्वमुच्चार्य वर्णादींस्तदनन्तम्।। अनुस्वारः परतरः।। अर्धेन्दुलसितम्।। तारेण रुद्धम्।। एतत्तव मनुस्वरूपम्।। गकारः पूर्वरूपम्।। अकारो मध्यमरूपम्।। अनुस्वारश्चांत्यरूपम् बिंदुरुत्तररूपम्।। नादः सन्धानम्।। संहिता सन्धिः।। सैषा गणेशविद्या।। गणक-ऋषिः।। निचृद्गायत्रीछन्दः।। गणपतिर्देवता।। ॐ गं गणपतये नमः।।

ॐ एकदन्ताय विद्महे वक्रतुण्डाय धीमहि।। तन्नो दन्तिः प्रचोदयात्।। एकदन्तञ्चतुर्हस्तं पाशमङ्कुशधारिणम्।। रदं च वरदं हस्तैर्विभ्राणं मूषकध्वजम्।।रक्तं लंबोदरं शूर्पकर्णकं रक्तवाससम्।। रक्तगंधानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम्।। भक्तानुकंपिनं देवं जगत्कारणमच्युतम्।। आविर्भूतञ्च सृष्ट्यादौ प्रकृतेः पुरुषात्परम्।। एवं ध्यायति यो नित्यं स योगी योगिनांवरः।। नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्ते अस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने शिवसुताय श्रीवरदमूर्तये नमः।। एतदथर्वशीर्षं योऽधीते।। स ब्रह्मभूयाय कल्पते।। स सर्वतः सुखमेधते।। स सर्वविघ्नैर्न बाध्यते।। स पञ्चमहापापात्प्रमुच्यते।। सायमधीयानो दिवसकृतं पापं नाशयति।। प्रातरधीयानो रात्रिकृतं पापं नाशयति।। सायंप्रातः प्रयुञ्जानोऽपापो भवति।।

सर्वत्राधीयानोऽपविघ्नो भवति।। धर्मार्थकाममोक्षं च विन्दति।। इदमथर्वशीर्षमशिष्याय न देयम्।। यो यदिमोहाद्दास्यति।। स पापीयान् भवति।। सहस्रावर्तनाद् यं यं काममधीते।। तं तमनेन साधयेत्।। अनेन गणपतिमभिषिञ्चति।। स वाग्मी भवति।। चतुर्थ्यामनश्नन् जपति।। स

**विद्यावान् भवति।। इत्यथर्वणवाक्यम्।। ब्रह्माद्याचरणं विद्यात्।। न बिभेति कदाचनेति।। यो दूर्वांकुरैर्यजति।। स वैश्रवणोपमो भवति।। यो लाजैर्यजति।। स यशोवान्भवति।। स मेधावान्भवति।। यो मोदकसहस्रेण यजति।। स वाञ्छितफलमवाप्नोति।। यः साज्यसमिद्भिर्यजति।। स सर्वं लभते।। स सर्वं लभते अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा।। सूर्यवर्चस्वीभवति।। सूर्यग्रहे महानद्यां प्रतिमासन्निधौ वा जप्त्वा।। सिद्धमन्त्रो भवति।। महाविघ्नात्प्रमुच्यते।। महादोषात्प्रमुच्यते।। महापापात्प्रमुच्यते।। स सर्वविद्भवति स सर्वविद्भवति।। य एवं वेद।।इत्युपनिषत्।। ॐ भद्रं कर्णेभिः०।।१।। स्वति न इन्द्रो०।।१।।**

।।इति गणपत्यथर्वशीर्षं समाप्तम्।।

## *पुरश्चरणविधिः*

एवं नित्यक्रमं प्रवर्तयन् श्यामाक्रमे वक्ष्यमाणेन विधिना अष्टाविंशतिसहस्रसंख्या पुरश्चरणजपः। प्रकृते कलियुगत्वाच्चतुर्गुणितम्। प्रथमेऽह्नि सहस्रम्। ततः प्रत्यहं त्रिसहस्रसंख्यञ्च कृत्वा जपदशांशेन होमः। तद्दशांशेन तर्पणम्, तद्दशांशेन ब्राह्मणभोजनानि च विदध्यात्।

## *होमे द्रव्याणि*

**मोदकैः पृथुकैर्लाजैः सक्तुभिश्चेक्षुपर्वभिः। नारिकेलैस्तिलैश्शुद्धैस्सुपक्वैः कदलीफलैः।।**

**मोदकाः-अखण्डिताः ग्रासमिताः, पृथुकलाजसक्तवो मुष्टिपरिमिताः। इक्षुप्रमाणं श्लोक एवोक्तम्। नारिकेलम् अष्टधा खण्डितम्। तिलाः चुलुकप्रमाणाः शतसंख्याका वा। कदली-फलमल्पं यद्यखण्डितं पृथु चेद्यथारुचि खण्डितम्। अमीषां द्रव्याणां मधुक्षीरघृतसिक्तानां पृथक् पृथगाहुतयो होमसंख्या पिण्डाष्टमभागमिताः ३५० श्लोकपाठक्रमेण भवन्ति। अष्टद्रव्यहोमात् प्रागावरणदेवतानामेकैकाहुतिः प्रधानदेवतायाद्दशाहुतयस्ता आज्येनैव भवन्ति। तर्पणपूर्वाङ्गन्तु चतुरावृत्तितर्पणवदेव। इत्थं पुरश्चरणेन सिद्धमनुः, स्वातन्त्र्येणोपास्तौ च श्रीक्रमोक्तेन क्रमेण नैमित्तिकार्चनपरः काम्यापेक्षी चेत् श्यामाक्रमे वक्ष्यमाणेन तत्तत्कामानुगुणेन द्रव्येणेष्ट्वा सिद्धसङ्कल्पः सुखी विहरेत्, इति शिवम्।**

## *श्रीमहागणपतिहोमः*

गणपतिद्धोमेऽष्टद्रव्यैरुक्तः (तानि मन्त्रमहोदधिप्रकारेण)

१. इक्षुः २. सक्तुः ३. रम्भाफलम् ४.पृथुकः ५. तिलः ६. मोदकम् ७.नालिकेरः ८. लाजः इति।

## फल-प्राप्ति-तालिका

| कालः | होम द्रव्य विवरण | संख्या | फलानि |
|---|---|---|---|
| शुक्ल चतुर्थी | नालिकेरखण्डानि (नारियल का खण्ड) | १००, ३०० अथवा १००० | श्रीप्राप्ति |
| शुक्ल प्रथमा | नालिकेरखण्डानि (नारियल खण्ड) | १००० | सर्ववश्यम् |
| शुक्ल द्वितीया | सक्तलड्डुकम् (सत्तु के लड्डू) | १००० | सर्ववश्यम् |
| शुक्ल तृतीया | लाजः (लाज) | १००० | सर्ववश्यम् |
| शुक्ल चतुर्थी | तिलाक्षताः (तिल एवं अक्षत मिलाकर) | १००० | सर्ववश्यम् |
| शुक्ल चतुर्थी | त्रिमधुरयुक्तलाजाः त्रिमधुरं (घी, दूध, मधु) | १००० | श्री प्राप्तिः |
| शुक्ल चतुर्थी | आज्ययुक्तं हविः (त्रिमधुरं से लाज मिलाकर) | १००० | विवाहः |
| शुक्ल चतुर्थी | एतेनैवव (आज्ययुक्त हवि) | १००० | इष्टप्राप्तिः |
| शुक्ल चतुर्थी | वर्षमेकं (उपर्युक्त द्रव्य से एक साल लगातार) | १००० | धन-धान्यप्राप्तिः अन्नसमृद्धिः |
| शुक्ल चतुर्थी | मधु स्वषकमात्रम् (मधु प्रति आवृत्ति कम से कम २५ग्रा.) | १००० | अधिक धनप्राप्तिः स्वर्ण लाभ एवं सर्वप्राणिवश्यम् |
| शुक्ल चतुर्थी | दधि स्वषकमात्रम् (दही २५ ग्राम) | १००० | सर्वसमृद्धिः |
| शुक्ल चतुर्थी | शुद्धघृत (शुद्ध देशी घी २५ग्राम) | १००० | अधिक धनप्राप्तिः |
| शुक्ल चतुर्थी | अन्नं कबलमात्रम् (अन्न एक कौर) | १००० | अन्न-समृद्धिः |
| शुक्ल चतुर्थी | पुष्पम् (पुष्प) | १००० | वस्त्र-लाभः |
| शुक्ल चतुर्थी | घृताक्तापूपम् (घी में लगाकर पूप) | १००० | मन्त्रसिद्धिः एवं राजवश्यम् |
| शुक्ल चतुर्थी | घृतमधुयुतक्षीरं (आज्यसिक्त मोदक) | १००० | युद्धेजयः |
| शुक्ल चतुर्थी | इक्षुखण्डः (घी, दूध, मधु का मिश्रण | १००० | राजवश्यम् |
| शुक्ल चतुर्थी | गन्ने का खण्ड) | १००० | विस्तार मनोभावना, सद्बुद्धिः श्रीप्राप्तिः |
| शुक्ल चतुर्थी | शर्करायुतपृथुकाः (शर्करामिश्रित चिवडा) | १००० | राजवश्यम् |
| शुक्ल चतुर्थी | सर्करायुतसक्तवः (शर्करामिश्रित सत्तु) | १००० | ब्राह्मणवश्यम् |
| शुक्ल चतुर्थी | त्रिमधुरसिक्तापूपम् (त्रिमधुरं सिक्तअपूप) | १००० | राजवश्यम् |
| शुक्ल चतुर्थी | पायसान्नं क्षीरान्नम् | १००० | बहुधनप्राप्तिः श्रीप्राप्तिः लक्ष्मीसिद्धिः |

| कालः | होम द्रव्य विवरण | संख्या | फलानि |
|---|---|---|---|
| एक मण्डल रोज (४८ दिन) | पूर्णनालिकेरम् (पूर्ण नारियल) | १००० | मन्त्र-सिद्धिः |
| शुक्ल षष्ठी | मोदकानि (मोदक) | ३३६ | इष्टार्थ-लाभः |
| शुक्ल अष्टमी | तिललड्डुकम् (तिल का लड्डु) | ३३६ | इष्टार्थ-लाभः |
| शुक्ल चतुर्दशी | गुडापूपम् | ३३६ | इष्टार्थ-लाभः |
| रोज | पृथुकाः, नालिकेर खण्डानि, मरिचानि व (चिवडा या नारियल खण्ड या काली मिर्च) | ३३६ | धनवृद्धिः |
| शुक्ल चतुर्दशी | रम्भाफलेपृथुकलाजः (रम्भाफल चिवडा लाज) | ३३६ | सर्ववश्यम् |
| शुक्ल चतुर्दशी | कमलम् (कमल) | ३३६ | राजवश्यम् |
| शुक्ल चतुर्दशी | रक्तकमलम् (लाल रंग का कमल) | ३३६ | लक्ष्मी-प्राप्तिः |
| शुक्ल चतुर्दशी | श्वेतकमलम् (श्वेत कमल) | ३३६ | वाग् विभूति-सिद्धिः |
| शुक्ल चतुर्दशी | रक्तकुमुदानि (लाल रंग कुमुद) | ३३६ | श्रीवश्यम् राजपत्नीवश्यम् |
| शुक्ल चतुर्दशी | श्वेतकुमुदानि (श्वेत कुमुदम्) | १००० | वाग्विभूति |
| शुक्ल चतुर्दशी | कुमुदपुष्पम् (कुमुद फूल) | ३३६ | मन्त्र-जनवश्यम् |
| शुक्ल चतुर्दशी | अश्वत्थ समित् | ३३६ | राज-विप्रवश्यम् |
| शुक्ल चतुर्दशी | उदुम्बरसमित् | ३३६ | क्षत्रियवश्यम् |
| शुक्ल चतुर्दशी | प्लक्षसमित् इजिले समित् (प्लहम्) | ३३६ | वैश्यवश्यम् |
| शुक्ल चतुर्दशी | वट समित | ३३६ | सर्वजनवश्यम् |
| शुक्ल चतुर्दशी | दध्योदनम् (दही भात) | ३३६ | वंश-वृद्धिः |
| शुक्ल चतुर्दशी | (वेतस् समित्) | ३३६ | वर्षा एवं जलवृद्धिश्च |
| शुक्ल चतुर्दशी | लाजाः | ३३६ | यशः मेधावृद्धिश्च |
| शुक्ल चतुर्दशी | गोक्षीरम् (गाय का दूध) | ३३६ | गोवृद्धिः |
| शुक्ल चतुर्दशी | दूर्वा | ३३६ | कुबेर-संपत्तिः |
| शुक्ल चतुर्दशी | (आज्यसिक्त समित्) | ८३६ | श्रीप्राप्तिः |
| शुक्ल चतुर्दशी | बिल्बसमित् विल्बपत्रं वा (बिल्व-समित् या बिल्व-पत्र) | १००० | अन्दर-अन्तरलक्ष्मी नाशः |
| शुक्ल चतुर्दशी | बिल्व-फलनि | १००० | बहिलक्ष्मी नाशः |

## ३. नामावलि-खण्डः

### *श्रीगणपति-अष्टोत्तरशत-नामावलिः*

१ ॐ विनायकाय नमः
२ ॐ विघ्नराजाय नमः
३ ॐ गौरीपुत्राय नमः
४ ॐ गणेश्वराय नमः
५ ॐ स्कन्दाग्रजाय नमः
६ ॐ अव्ययाय नमः
७ ॐ पूताय नमः
८ ॐ दक्षाय नमः
९ ॐ अध्यक्षाय नमः
१० ॐ द्विजप्रियाय नमः
११ ॐ अग्निगर्भच्छिदे नमः
१२ ॐ इन्द्रश्रीप्रदाय नमः
१३ ॐ वाणीप्रदाय नमः
१४ ॐ अव्ययाय नमः
१५ ॐ सर्वसिद्धिप्रदाय नमः
१६ ॐ शर्वतनयाय नमः
१७ ॐ शर्वरीप्रियाय नमः
१८ ॐ सर्वात्मकाय नमः
१९ ॐ सृष्टिकर्त्रे नमः
२० ॐ देवाय नमः
२१ ॐ अनेकार्च्चिताय नमः
२२ ॐ शिवाय नमः
२३ ॐ शुद्धाय नमः
२४ ॐ बुद्धिप्रियाय नमः
२५ ॐ शान्ताय नमः
२६ ॐ ब्रह्मचारिणे नमः
२७ ॐ गजाननाय नमः
२८ ॐ द्वैमात्रेयाय नमः
२९ ॐ मुनिस्तुत्या नमः
३० भक्तविघ्नविनाशनाय नमः
३१ ॐ एकदन्ताय नमः
३२ ॐ चतुर्बाहवे नमः
३३ ॐ चतुराय नमः
३४ ॐ शक्तिसंयुताय नमः
३५ ॐ लम्बोदराय नमः
३६ ॐ शूर्पकर्णाय नमः
३७ ॐ हरये नमः
३८ ॐ ब्रह्मविदुत्तमाय नमः
३९ ॐ कालाय नमः
४० ॐ ग्रहपतये नमः
४१ ॐ कामिने नमः
४२ ॐ सोमसूर्याग्निलोचनाय नमः
४३ ॐ पाशाङ्कुशधराय नमः
४४ ॐ चण्डाय नमः
४५ ॐ गुणातीताय नमः
४६ ॐ निरंजनाय

४७ ॐ अकल्मषाय नमः
४८ ॐ स्वयंसिद्धाय नमः
४९ ॐ सिद्धार्च्चितपदाम्बुजाय नमः
५० ॐ बीजापूरफलासक्ताय नमः
५१ ॐ वरदाय नमः
५२ ॐ शाश्वताय नमः
५३ ॐ कृतिने नमः
५४ ॐ द्विजप्रियाय नमः
५५ ॐ वीतभयाय नमः
५६ ॐ गदिने नमः
५७ ॐ चक्रिणे नमः
५८ ॐ इक्षुचापधृते नमः
५९ ॐ श्रीदाय नमः
६० ॐ अजाय नमः
६१ ॐ उत्पलकराय नमः
६२ ॐ श्रीपतये नमः
६३ ॐ स्तुतिहर्षिताय नमः
६४ ॐ कुलाद्रिभेत्रे नमः
६५ ॐ जटिलाय नमः
६६ ॐ कलिकल्मषनाशिने नमः
६७ ॐ चन्द्रचूडामणये नमः
६८ ॐ कान्ताय नमः
६९ ॐ पापहारिणे नमः
७० ॐ समाहिताय नमः
७१ ॐ आश्रितश्रीकराय नमः
७२ ॐ सौम्याय नमः
७३ ॐ भक्तवाञ्छितदायकाय नमः
७४ ॐ शान्ताय नमः
७५ ॐ कैवल्यसुखदाय नमः
७६ ॐ सच्चिदानन्दविग्रहाय नमः
७७ ॐ ज्ञानिने नमः
७८ ॐ दयायुताय नमः
७९ ॐ दान्ताय नमः
८० ॐ ब्रह्मद्वेषविवर्जिताय नमः
८१ ॐ प्रमत्तदैत्यभयदाय नमः
८२ ॐ श्रीकण्ठाय नमः
८३ ॐ विबुधेश्वराय नमः
८४ ॐ रमार्चिताय नमः
८५ ॐ विधये नमः
८६ ॐ नागराजयज्ञोपवीतवते नमः
८७ ॐ स्थूलकण्ठाय नमः
८८ ॐ स्वयंकर्त्रे नमः
८९ ॐ सोमघोषप्रियाय नमः
९० ॐ परस्मै नमः
९१ ॐ स्थूलतुण्डाय नमः
९२ ॐ अग्रण्ये नमः
९३ ॐ धीराय नमः
९४ ॐ वागीशाय नमः
९५ ॐ सिद्धिदायकाय नमः
९६ ॐ दूर्वाबिल्वप्रियाय नमः
९७ ॐ अव्यक्तमूर्त्तये नमः
९८ ॐ अद्भुतमूर्त्तिमते नमः
९९ ॐ शैलेन्द्रतनुजेखेलनोत्सुकमानसाय नमः
१०० ॐ स्वलावण्यसुधासाराय नमः

## चतुर्थावरणार्चनम्

इति दशदिक्पालान् सम्पूज्य पुष्पाञ्जलिमादाय मूलमुच्चार्य ओं अभीष्टसिद्धिं चतुर्थावरणार्चनम्। इत्युक्त्वा पुष्पाञ्जलिं च दत्वा विशेषार्घ्याद्बिन्दुं निक्षिप्य पूजितास्तर्पिताः सन्तु इति वदेत्। इति चतुर्थावरणम्। ततः पूर्वादिक्रमेण तत्तत्समीपे।

३५. ॐ वं वज्राय नमः
३६. ॐ शं शक्त्यै नमः
३७. ॐ दं दण्डाय नमः
३८. ॐ खं खड्गाय नमः
३९. ॐ पां पाशाय नमः
४०. ॐ अं अङ्कुशाय नमः
४१. ॐ गं गदायै नमः
४२. ॐ त्रिं त्रिशूलाय नमः
४३. ॐ पं पद्माय नमः
४४. ॐ चं चक्राय नमः

## पञ्चमावरणार्चनम्

इत्यस्त्राणि पूजयेत्। ततः पुष्पाञ्जलिं गृहीत्वा मूलमुच्चार्य अभीष्टसिद्धिं मे देहि पञ्चमावरणार्चनम्।

इत्युक्त्वा पुष्पाञ्जलिं च दत्वा विशेषार्घ्याद्बिन्दुं निक्षिप्य पूजितास्तर्पिताः सन्तु इति वदेत्। इत्यावरणपूजां कृत्वा धूपादिनमस्कारान्तं सम्पूज्य पिशितं वा फलं मोदकम् वा गुडपायसं बलिं दद्यात्। तत्र मन्त्रः अस्य पुरश्चरणमेकलक्षजपः। तद्दशांशतस्तिलहोमः तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनानि च कुर्यात्। एवं कृते मन्त्रः सिद्धो भवति। एवं सिद्धे मन्त्रे, मन्त्री प्रयोगान् साधयेत्। तथा च— लक्षमेकं जपेमन्त्रं दशांशं जुहुयात्तिलैः।

## *श्रीशक्तिविनायक आवरण पूजा*

## *शक्तिविनायकयन्त्रम्*

प्रथमतः मूलमन्त्र न्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धतिप्रकारेण पात्रसाधनानि पूरयित्वा ततः एतत् आवरणपूजां चारभेत्।

**''मं मण्डूकादि कल्पात्रान्त पीठदेवताभ्यो नमः इति''—श्रीपादुकां पूजयामि तर्पयामि नमः** इति वदेत्।

ततः पुष्पाञ्जलिमादाय मूलमुच्चार्य। अभीष्टसिद्धिं मे देहि विशेषार्घ्याद्बिन्दुं निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत् इति प्रथमावरणम्।



**प्रथमावरणार्चनम्**

षट्कोणकेसरेषु आग्नेय्यादिचतुर्षु दिक्षु मध्ये दिक्षु च।

१. **ॐ ग्रां हृदयाय नमः**

२. **ॐ ग्रीं शिरसे स्वाहा**

३. **ॐ ग्रूं शिखायै वषट**

४. **ॐ ग्रैं कवचाय हुम्**

५. **ॐ ग्रौं नेत्रत्रयाय वौषट्**

६. **ॐ ग्रः अस्त्राय फट्** इति षडङ्गानि पूजयेत्।

ततोऽष्टदले पूज्यपूजकयोरन्तराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य दक्षहस्ते तर्जन्यङ्गुष्ठाभ्यां गन्धाक्षतपुष्पाणि गृहीत्वा प्राचीक्रमेण। अष्टसु दिक्षु।

**७. ॐ वक्रतुण्डाय नमः**

**८. ॐ एकदंष्ट्राय नमः**

**९. ॐ महोदराय नमः**

**१०. ॐ हस्तिमुखाय नमः**

**११. ॐ लम्बोदराय नमः**

**१२. ॐ विकटाय नमः**

**१३. ॐ विघ्नराजाय नमः**

**१४. ॐ धूम्रवर्णाय नमः** इत्यष्टौ पूजयेत्।

## द्वितीयावरणार्चनम्

ततः पुष्पाञ्जलिं दत्त्वाष्टदलाग्रेषु प्राचीक्रमेण

**१५. ॐ ब्राह्मयै नमः**

**१६. ॐ माहेश्वर्यै नमः**

**१७. ॐ कौमार्यै नमः**

**१८. ॐ वैष्णव्यै नमः**

**१९. ॐ वाराह्यै नमः**

**२०. ॐ इन्द्राण्यै नमः**

**२१. ॐ चामुण्डायै नमः**

**२२. ॐ महालक्ष्म्यै नमः** इत्यष्टौ पूजयेत्।।

ततः पुष्पाञ्जलिं दत्वा भूपुरे पूर्वादिक्रमेण इन्द्रदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् अभीष्टसिद्धिं मे देहि इति द्वितीयावरणार्चनम्।

## तृतीयावरणार्चनम्

**२३. ॐ लं इन्द्राय नमः**

**२४. ॐ रं अग्नये नमः**

**२५. ॐ यं यमाय नमः**

२६. ॐ क्षं निर्ऋतये नमः
२७. ॐ वं वरुणाय नमः
२८. ॐ यं वायवे नमः
२९. ॐ कुं कुबेराय नमः
३०. ॐ हं ईशानाय नमः
३१. ॐ पूर्वेशानयोर्मध्ये ॐ आं ब्रह्मणे नमः
३२. ॐ वरुणनैर्ऋतयोर्मध्ये ॐ ह्रीं अनन्ताय नमः

इति दशदिक्पालान् पूजयित्वा पुष्पाञ्जलिं च दद्यात् अभीष्टसिद्धिं मे देहि...... इति तृतीयावरणार्चनम्।

## चुतर्थावरणार्चनम्

३३. ॐ वं वज्राय नमः
३४. ॐ शं शक्तये नमः
३५. ॐ दं दण्डाय नमः
३६. ॐ खं खड्गाय नमः
३७. ॐ पां पाशाय नमः
३८. ॐ अं अङ्कुशाय नमः
३९. ॐ गं गदायै नमः
४०. ॐ त्रिं त्रिशूलाय नमः
४१. ॐ पं पद्माय नमः
४२. ॐ चं चक्राय नमः

इति वज्राद्यस्त्राणि पूजयेत् इत्यावरणपूजां कृत्वा धूपादिनमस्कारान्तं सम्पूज्य जपं कुर्यात्। अस्य पुरश्चरणंचतुर्लक्षजपः। अपूपैर्दशांशतो होमः मध्वक्तैर्दशांशतस्तर्पणं तद्दशांशेन मार्जनं तद्दशांशेन ब्राह्मण भोजनं च कुर्यात्। एवंकृतो मन्त्रः सिद्धो भवति।

# श्रीलक्ष्मी विनायक आवरण पूजा

## *श्रीलक्ष्मीविनायकयन्त्रम्*

### प्रथमावरणम्

प्रथमतः मूलमन्त्र न्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति प्रकारेण पात्रासाथनानि पूरयित्वा ततः एतत् आवरणपूजां आरभेत्।




मं मण्डूकादि कल्पात्रान्त पीठदेवताभ्यो नमः इति श्रीपादुकां पूजयामि तर्पयामि नमः इति वदेत्।

**१. ॐ श्रां गां हृदयाय नमः**

**२. ॐ श्रीं गीं शिरसे स्वाहा**

**३. ॐ श्रूं गूं शिखायै वषट्**

**४. ॐ श्रैं गैं कवचाय हुम्**

**५. ॐ श्रौं गौं नेत्रत्रयाय वौषट्**

**६. ॐ श्रः गः अस्त्राय फट्**

इति षडङ्गानि पूजयेत् ततः पुष्पाञ्जलिमादाय मूलमुच्चार्य अभीष्टसिद्धिं मे देहि शरणागत-वत्सल। भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् इति पठित्वा पुष्पाञ्जलिं च दत्वा विशेषार्घ्याद्बिदुं निक्षिप्य पूजितास्तर्पिताः सन्तु इति वदेत्।

देवदक्षिणपार्श्वे—

७. **ॐ शङ्खाय नमः**

८. देवतावामे **ॐ पद्मनिधये नमः**

## द्वितीयावरणम्

इति पूजयेत्। ततोऽष्टदले पूज्य पूजकयोरन्तरालें प्राचीं तदनुसारेण च न्या दिशः प्रकल्प्य दक्षहस्ते तर्जन्यङ्गुष्ठाभ्यां गन्धाक्षतपुष्पाणि गृहीत्वा प्राचीक्रमेण अष्टसु दिक्षु।

**९. ॐ बलायै नमः**

**१०. ॐ विमलायै नमः**

**११. ॐ कमलायै नमः**

**१२. ॐ वनमालिन्यै नमः**

**१३. ॐ विभीषिकायै नमः**

**१४. ॐ मालिकायै नमः**

**१५. ॐ शाङ्कर्यै नमः**

**१६. ॐ वसुबालिकायै नमः**

इत्यष्टौ शक्तीः पूजयेत् अभीष्टसिद्धिं मे देहि—इति द्वितीयावरणार्चनम् इति पठित्वा पुष्पाञ्जलिं च दत्त्वा पूजितास्तर्पिताः सन्तु इति वदेत्। इति द्वितीयावरणम्।

### तृतीयावरणम्

भूपुरे इन्द्रादिदशदिक्पालान् वज्रायुधानि च पूजयेत्। इत्यावरणपूजां कृत्वा धूपादिनमस्कारान्तं संपूज्य जपं कुर्यात्।

**१७. ॐ लं इन्द्राय नमः**
**१८. ॐ रं अग्नये नमः**
**१९. ॐ यं यमाय नमः**
**२०. ॐ क्षं निर्ऋतये**
**२१. ॐ वं वरुणाय नमः**
**२२. ॐ यं वायवे नमः**
**२३. ॐ कुं कुबेराय नमः**
**२४. ॐ हं ईशानाय नमः**
**२५. पूर्वेशानयोर्ध्ये ॐ आं ब्रह्मणे नमः**
**२६. वरुणनैर्ऋतयोर्मध्ये ॐ ह्रीं अनन्ताय नमः**

इति दशदिक्पालान् पूजयित्वा पुष्पाञ्जलिं च दद्यात् अभीष्टसिद्धिं मे देहि इति तृतीयावरणार्चनम्।

### तुरीयावरणम्

**२७. ॐ वं वज्राय नमः**
**२८. ॐ शं शक्तये नमः**
**२९. ॐ दं दण्डाय नमः**
**३०. ॐ खं खड्गाय नमः**
**३१. ॐ पां पाशाय नमः**
**३२. ॐ अं अङ्कुशाय नमः**
**३३. ॐ गं गदायै नमः**
**३४. ॐ त्रिं त्रिशूलाय नमः**
**३५. ॐ पं पद्माय नमः**
**३६. ॐ चं चक्राय नमः**

इति वज्राद्यस्त्राणि पूजयेत् इत्यावरणपूजां कृत्वा धूपादिनमस्कारान्तं सम्पूज्य जपं कुर्यात्। अस्य पुरश्चरणं चतुर्लक्षजपः। बिल्वसमिद्भिर्दशांशतो होमः तत्तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनानि च कुर्यात् एवंकृतो मन्त्रः सिद्धो भवति। सिद्धै चैतमन्त्रे मन्त्री प्रयोगान् साधयेत्।

## श्रीत्रैलोक्यमोहनकरगणेशावरण पूजा

### *त्रैलोक्यमोहनकरगणेशयन्त्रम्*

प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धतिप्रकारेण पात्रसाधनानि पूरयित्वा ततः एतदावरणपूजां आरभेत्।

मं मण्डूकादि कल्पात्रान्त पीठदेवताभ्यो नमः इति गणेशमण्डले सर्वतो भद्रमण्डले वा अर्चयेत्। ततः नव पीठ शक्तीः अर्चयेत्।

ततः श्रीपादुकां पूजयामि तर्पयामि नमः इति वदेत्।




### प्रथमावरणार्चनम्

षट्कोण केशरेषु षडङ्गानि पूजयेत्। आग्नेय्यादिचतुर्षु दिक्षु मध्ये दिक्षु च

**ॐ वक्रतुण्डैकदंष्ट्राय क्लीं ह्रीं श्रीं वां हृदयाय नमः**

**ॐ गणपतये शिरसे स्वाहा**

**ॐ वरवरद शिखायै वषट्**

**ॐ सर्वजनं कवचाय हुम्**

**ॐ मे वशमानय नेत्रत्रयाय वौषट्**

**ॐ मे स्वाहा अस्त्राय फट्** इति षडङ्गानि पूजयेत्।

ततः पुष्पाञ्जलिमादाय मूलमुच्चार्य। अभीष्टसिद्धिं मे देहि... प्रथमावरणार्चनम् इति पठित्वा पुष्पाञ्जलिं च दत्वा विशेषार्घ्यबिन्दुं निक्षिप्य पूजितास्तर्पिता सन्तु इति वदेत् इति प्रथमावरणम्। ततोऽष्टदले पूज्य पूजकयोरन्तराले प्राचीं तदनुसारेण अन्याः दिशः च प्रकल्प्य दक्षहस्ते तर्जन्यङ्गुष्ठाभ्यां गन्धाक्षतपुष्पाणि गृहीत्वा प्राचीक्रमेण अष्टसु दिक्षु।

## द्वितीयावरणार्चनम्

| | | |
|---|---|---|
| **ॐ वामायै नमः** | | **ॐ प्रमथिन्यै नमः** |
| **ॐ ज्येष्ठायै नमः** | देवस्याग्ने | **ॐ सर्वभूतदमन्यै नमः** |
| **ॐ रौद्र्यै नमः** | | **ॐ मनोन्मन्यै नमः** |
| **ॐ काल्यै नमः** | चतुर्षु दिक्षु | **ॐ प्रमोदाय नमः** |
| **ॐ कलपदादिकायै नमः** | | **ॐ सुमुखाय नमः** |
| **ॐ विकारिण्यै नमः** | | **ॐ दुर्मुखाय नमः** |
| **ॐ बलायै नमः** | | **ॐ विघ्ननाशाय नमः** इति पूजयेत्। |

ततः पुष्पाञ्जलिमादाय मूलमुच्चार्य। **अभीष्टसिद्धिं मे देहि द्वितीयावरणार्चनम्।** इति पठित्वा पुष्पाञ्जलिं च दत्वा विशेषार्घ्याद्बिन्दुं निक्षिप्य **पूजितास्तर्पिताः सन्तु** इति वदेत्। इति द्वितीयावरणम्। ततोऽष्टदलाग्रेषु।

## तृतीयावरणार्चनम्

| | |
|---|---|
| **ॐ आं ब्रह्मण्यै नमः** | **ॐ लूं वाराह्यै नमः** |
| **ॐ ईं माहेश्वर्यै नमः** | **ॐ ऐं इन्द्रायै नमः** |
| **ॐ ऊं कौमार्य्यै नमः** | **ॐ औं चामुण्डायै नमः** |
| **ॐ ॠं वैष्णव्यै नमः** | **ॐ अः महालक्ष्म्यै नमः** |

ततः पुष्पाञ्जलिमादाय मूलमुच्चार्य। **अभीष्टसिद्धिं मे देहि शरणागतवत्सल—** तृतीयावरणार्चनम् इति पठित्वा पुष्पाञ्जलिं च दत्वा विशेषार्घ्यद्बिन्दुं निक्षिप्य पूजितास्तर्पिताः सन्तु इति वदेत्। इति तृतीयावरणार्चनम्।

ततः भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् अभीष्टसिद्धिं मे देहि— तुभ्यं अस्य पुरश्चरणं चतुर्लक्षजपः। अष्टद्रव्यैर्दशांशतो होमः एवंकृतो मन्त्रः सिद्धो भवति। सिद्धे मन्त्रे मन्त्री प्रयोगान् साधयेत्।

(०)

## श्रीहरिद्रागणेशावरण पूजा

### *श्रीहरिद्रागणेशयन्त्रम्*

प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धतिप्रकारेण पात्रासानानि पूरयित्वा ततः एतदावरणपूजां आरभेत्।




मं मण्डूकादि कल्पात्रान्त पीठदेवताभ्यो नमः इति गणेशमण्डले सर्वतोभद्रणमडले वा अर्चयेत्। ततः नवपीठ शक्तीः अर्चयेत्। तद्यथा पूर्वादिक्रमेण इति पुष्पाञ्जलिं कुर्यात्। वक्ष्यमाण इति वदेत्।

**प्रथमावरणम्**

षट्कोण-केसरेषु आग्नेय्यादिषु चतसृषु दिक्षु मध्ये दिक्षु च।

**ॐ हुं गं ग्लौं हृदयाय नमः**

**ॐ हुं गं ग्लौं हरिद्रागणपतये शिरसे स्वाहा**

**ॐ हुं गं ग्लौं वरवरद शिखायै वषट्**

**ॐ हुं गं ग्लौं सर्वजनहृदयं कवचाय हुम्**

**ॐ हुं गं ग्लौं स्तम्भय स्तम्भय नेत्रत्रयाय वौषट्**

**ॐ हुं गं ग्लौं स्वाहा अस्त्राय फट्।**

इति षडङ्गानि पूजयेत् ततः पुष्पाञ्जलिमादाय मूलमुच्चार्य—अभीष्टसिद्धिं मे देहि शरणागतवत्सल प्रथमावरणार्चनम्। इति पठित्वा पुष्पाञ्जलिं च दत्वा पूजितास्तर्पिताः सन्तु इति वदेत्। इति प्रथमावरणम्।

## द्वितीयावरणम्

ततोऽष्टदलेषु पूज्यपूजकयोरन्तराले प्राचीं तदनुसारेण अन्या दिशः च प्रकल्प्य दक्षहस्ते तर्जन्यङ्गुष्ठाभ्यां गन्धाक्षतपुष्पाणि गृहीत्वा प्राचीक्रमेण अष्टसु दिक्षु।

**ॐ वामायै नमः** **ॐ विकारिण्यै नमः**

**ॐ ज्येष्ठायै नमः** **ॐ बलायै नमः**

**ॐ रौद्र्यै नमः** **ॐ प्रमथिन्यै नमः** इत्यष्टौ पूजयेत्।

**ॐ काल्यै नमः** देवस्याग्रे **ॐ सर्वभूतदमन्यै नमः**

**ॐ कलपदादिकायै नमः** **ॐ मनोन्मन्यै नमः** इति पूजयेत्।

ततः चतसृषु दिक्षु प्राचीक्रमेण

**ॐ प्रमोदाय नमः** **ॐ दुर्मुखाय नमः**

**ॐ सुमुखाय नमः** **ॐ विघ्ननाशाय नमः**

इति पूजयेत्। ततः पुष्पाञ्जलिमादाय मूलमुच्चार्य अभीष्टसिद्धिं मे देहि शरणागतवत्सल भक्त्या समर्पये तुभ्यं द्वितीया वरणार्चनम्। इति पठित्वा पुष्पाञ्जलिमादाय मूलमुच्चार्य अभीष्टसिद्धिं मे देहि शरणागतवत्सल। भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम्। इति पठित्वा पुष्पाञ्जलिं च दत्वा पूजितास्तर्पिताः सन्तु इति वदेत्। इति द्वितीयावरणार्चनम् ततोऽष्टदलेषु।

## तृतीयावरणम्

**ॐ आं ब्राहम्यै नमः** **ॐ लृं वराह्यै नमः**

**ॐ ईं माहेश्वर्यै नमः** **ॐ ऐं इन्द्रण्यै नमः**

**ॐ ऊं कौमार्यै नमः** **ॐ ॐ चामुण्डायै नमः**

**ॐ ऋं वैष्णव्यै नमः** **ॐ अः महालक्ष्म्यै नमः**

इत्यष्टौ पूजयेत्। ततः पुष्पाञ्जलिमादाय मूलमुच्चार्य अभीष्टसिद्धिं मे देहि शरणागतवत्सल—तृतीयावरणार्चनम् इति पठित्वा पुष्पाञ्जलिं च दत्वा विशेषार्घ्याद्बिन्दुं निक्षिप्य पूजितास्तर्पिताः सन्तु इति वदेत्। इति तृतीयावरणम्। ततः भूपुरे पूर्वादिक्रमेण इन्द्रादिदशादिक्पालान् वज्राद्ययुधानि च सम्पूजयेत्। इत्यावरण पूजा कृत्वा धूपादिनमस्कारान्तं सन्पूज्य जपं कुर्यात्। अस्य पुरश्चरणं चतुर्लक्षजपः। हरिद्राचूर्णमिश्रिताज्यतंडुलैश्च

दशांशतो होमः। तत्तदशांशेन तर्पणमार्जनब्राह्मणभोजनानि च कुर्यात्। एवं कृते मन्त्रः सिद्धो भवति सिद्धे च मन्त्रेमन्त्री प्रयोगान् साधयेत्।

## ६. श्रीमहागणपतिस्तोत्रमालाखण्डः

### *श्रीविघ्नेश्वरषोडशनामस्तोत्रम्*

**सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः। लम्बोदरश्च विकटो विघ्नराजो गणाधिपः ।।१।।**

**धूमकेतुर्गणाध्यक्षः भालचन्द्रो गजाननः। वक्रतुण्डश्शूर्पकर्णो हेरम्बस्कन्दपूर्वजः ।।२।।**

**षोडशैतानि नामानि यः पठेच्छृणुयादपि।**

**विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा। सङ्ग्रामे सर्वकार्येषु विघ्नस्तस्य न जायते।।३।।**

इति श्रीविघ्नेश्वरषोडशनाम स्तोत्र समाप्तम्

### *श्रीविघ्नेश्वराष्टोत्तरशतनामस्तोत्रं*

**विनायको विघ्नराजो गौरीपुत्रो गणेश्वरः। स्कन्दाग्रजोऽव्ययः पूतो दक्षोऽध्यक्षो द्विजप्रियः।।१।।**

**अग्निगर्भच्छिदिन्द्रश्रीप्रदो वाणीप्रदोऽव्ययः। सर्वसिद्धिप्रदश्शर्वतनेयश्शर्वरीप्रियः ।।२।।**

**सर्वात्मकस्सृष्टिकर्ता देवोऽनेकार्चितश्शिवः। शुद्धो बुद्धिप्रियश्शान्तो ब्रह्मचारी गजाननः।।३।।**

**द्वैमात्रेयो मुनिस्तुत्यो भक्तविघ्नविनाशनः। एकदन्तश्चतुर्बाहुश्चतुरश्शक्तिसंयुतः ।।४।।**

**लम्बोदरश्शूर्पकर्णो हरिर्ब्रह्मविदुत्तमः। कालो ग्रहपतिः कामी सोमसूर्याग्निलोचनः।।५।।**

**पाशाङ्कुशधरश्चण्डो गुणातीतो निरञ्जनः। अकल्मषस्स्वयंसिद्धस्सिद्धार्चितपदाम्बुजः ।।६।।**

**बीजापूरफलासक्तो वरदश्शाश्वतः कृती। द्विजप्रियो वीतभयो गदी चक्रीक्षुचापधृत्।।७।।**

**श्रीदोऽज उत्पलकरश्श्रीपतिः स्तुतिहर्षितः। कुलाद्रिभेत्ता जटिलः कलिकल्मषनाशनः।।८।।**

**चन्द्रचूडामणिः कान्तः पापहारी समाहितः। आश्रितश्रीकरस्सौम्यो भक्तवाञ्छितदायकः।।९।।**

**शान्तः कैवल्यसुखदस्सच्चिदानन्दविग्रहः। ज्ञानी दयायुतो दान्तो ब्रह्मद्वेषविवर्जितः ।।१०।।**

**प्रमत्तदैत्यभयदश्श्रीकण्ठो विबुधेश्वरः। रमार्चितो विधिर्नागराजयज्ञोपवीतवान् ।।११।।**

**स्थूलकण्ठः स्वयंकर्ता सामघोषप्रियः परः। स्थूलतुण्डोऽग्रणीर्धीरो वागीशस्सिद्धिदायकः।।१२।।**

**दूर्वाबिल्वप्रियोऽव्यक्तमूर्तिरद्भुतमूर्तिमान्। शैलेन्द्रतनुजोत्सङ्गखेलनोत्सुकमानसः ।।१३।।**

**स्वलावण्यसुधासारजितमन्मथविग्रहः। समस्तजगदाधारो मायी मूषकवाहनः ।।१४।।**

**हृष्टस्तुष्टः प्रसन्नात्मा सर्वसिद्धिप्रदायकः। अष्टोत्तरशतेनैव नाम्ना विघ्नेश्वरं विभुम् ।।१५।।**

तुष्टाव शङ्करः पुत्रं त्रिपुरं हन्तुमुद्यतः । यः पूजयेदनेनैव भक्त्या सिद्धिविनायकम् ।।१६।।

दूर्वादलैर्बिल्वपत्रैः पुष्पैर्वा चन्दनाक्षतैः । सर्वान्कामानवाप्नोति सर्वविघ्नैः प्रमुच्यते ।।१७।।

।।इति श्रीभविष्योत्तरपुराणे विघ्नेश्वराष्टोत्तरशतनामस्तोत्रं सम्पूर्णम्।।

## *श्रीमहागणपतिध्यानम्*

हस्तीन्द्रानन मिन्दुचूजमरूण्च्छाय त्रिनेत्र रसा-

दाश्लिष्टं प्रियया सपद्मकख्या स्वाकरस्यया संततम्।

बीणापरगदाधनुस्त्रिशिखयुक्चक्राब्णपाशोत्पल-

ब्रीह्यग्रेस्वविषाणरत्नकलशान्स्तैर्व हन्तं भजै।। (भजे)

गंडपालीगलद्दानपूरलाल समानसान्।

द्विरेफान कर्णतालभ्यिं वरायन्त मुहुर्मुहुः।।

कराग्रधृत माणिक्य कुंभवक्त्रचित्रिर्गतैः।

रत्नवर्षै प्रीण्यन्तं साधकान्मदविहगलम्।।

माणिक्य मकुटोपेतं सर्वाभरणभूषितम्।

शुक्लाम्बरधरं विष्णुं शशिवर्ण चतुर्भुजम्।।

प्रसन्नवदनंध्येत्सर्वविघनोपशान्तये।।

।।श्रीगणेशाय नमः।।

## *श्रीमहागणपतिसहस्त्रनामस्तोत्रम्*

व्या उवाच—

कथं नाम्नां सहस्त्रं स्वं गणेश उपदिष्टवान् ।

शिवायैतन्ममाचक्ष्व लोकानुग्रहतत्पर ।।१।।

ब्रह्मोवाच—

देव एवं पुराराति: पुरत्रयजयोद्यमे ।

अनर्चनाद्गणेशस्य जातो विघ्नाकुलः किल ।।२।।

मनसा स विनिर्धार्य ततस्तद्विघ्नकारणम् ।

महागणपतिं भक्त्या समभ्यर्च्य यथाविधि ।।३।।

विघ्नप्रशमनोपायमपृच्छदपराजितः ।

संतुष्टः पूजया शम्भोर्महागणपतिः स्वयम् ।।४।।

सर्वविघ्नैकहरणं सर्वकामफलप्रदम् ।

ततस्तस्मै स्वकं नाम्नां सहस्रमिदमब्रवीत् ।।५।।

अस्य श्रीमहागणपतिसहस्रनामस्तोत्रमन्त्रस्य। महागणपतिर्ऋषिः। अनुष्टुप्छन्दः। महागणपतिर्देवता। गं बीजम्। हुं शक्तिः। स्वाहा कीलकम्। चतुर्विधपुरुषार्थसिद्ध्यर्थे जपादौ विनियोगः।।

अथ न्यासः

ॐ गां अंगुष्ठाभ्यां नमः हृदयाय नमः।। ॐ गीं तर्जनी० शिरसे०। ॐ गूं मध्यमाभ्यां० शिखायै०। ॐ गैं अनामिका० कवचाय०।। ॐ गौं कनिष्ठिका० नेत्रत्रयाय०। ॐ गः करतलकरपृष्ठा० अस्त्राय०।।

इति न्यासः

अथ ध्यानम्

पञ्चवक्त्रो दशभुजो भालचन्द्रः शशिप्रभः ।।

मुण्डमालः सर्पभूषो मुकुटाङ्गदभूषणः ।।

अग्न्यर्कशशिनो भाभिस्तिरस्कुर्वन्दशायुधः ।।

इति ध्यानम्

मानसोपचारैः सम्पूज्य।

## *श्रीगणपतिसहस्रनामस्तोत्रम्*

गणेश्वरो गणक्रीडो गणनाथो गणाधिपः । एकदंष्ट्रो वक्रतुण्डो गजवक्त्रो महोदरः ।।१।।

लम्बोदरो धूम्रवर्णो विकटो विघ्ननायकः । सुमुखो दुर्मुखो बुद्धो विघ्नराजो गजाननः ।।२।।

भीमः प्रमोद आमोद सुरानन्दो मदोत्कटः । हेरम्बश्शम्बरश्शम्भुर्लम्बकर्णो महाबलः ।।३।।

नन्दनोऽलम्पटोऽभीरु र्मेघनादो गणञ्जयः । विनायको विरूपाक्षो धीरशूरो वरप्रदः ।।४।।

महागणपतिर्बुद्धिप्रियः क्षिप्रप्रसादनः । रुद्रप्रियो गणाध्यक्ष उमापुत्रोऽघनाशनः ।।५।।

कुमारगुरुरीशानपुत्रो मूषकवाहनः । सिद्धिप्रियः सिद्धिपतिस्सिद्धस्सिद्धिविनायकः ।।६।।

अविघ्नस्तुम्बुरुस्सिंहवाहनो मोहिनीप्रियः । कालकङ्कटो राजपुत्रश्शकलस्सम्मितोऽमितः ।।७।।
कूष्माण्डसामसम्भूति दुर्जयो धूर्जयोजयः । भूपतिर्भुवनपति र्भूतानां पतिरव्ययः ।।८।।
विश्वकर्ता विश्वमुखो विश्वरूपो निधिर्घृणिः । कविः कवीनामृषभो ब्रह्मण्यो ब्रह्मणस्पतिः ।।९।।
ज्येष्ठराजो निधिपति र्निधिप्रियपतिप्रियः । हिरण्मयपुरान्तस्थः सूर्यमण्डलमध्यगः ।।१०।।
कराहतिध्वस्तसिन्धुसलिलः पूषदन्तभित् । उमाङ्ककेळिकुतुकी मुक्तिदः कुलपालनः ।।११।।
किरीटी कुण्डली हारी वनमाली मनोमयः । वैमुख्यहतदैसश्रीः पादाहति जितक्षितिः ।।१२।।
सद्योजातः स्वर्णाभुंज मेखली दुर्निमित्तहृत्। दुस्स्वप्नहृत्प्रसहनो गुणी नादप्रतिष्ठितः ।।१३।।
सुरूपस्सर्वनेत्राधिवासो वीरासनाश्रयः। पीताम्बरः खण्डरदः खण्डेन्दुकृतशेखरः ।।१४।।
चित्राङ्कश्यामदशनो भालचन्द्रश्चतुर्भुजः । योगाधिपस्तारकस्थः पुरुषो गजकर्णकः ।।१५।।
गणाधिराजो विजयस्थिरो गजपतिध्वजी । देवदेवः स्मरप्राणदीपको वायुकीलकः ।।१६।।
विपश्चिद्वरदो नादोन्नादभिन्नबलाहकः । वराहरदनो मृत्युञ्जयो व्याघ्राजिनांबरः ।।१७।।
इच्छाशक्तिधरो देवत्राता दैत्यविमर्दनः । शम्भुवक्त्रोद्भवश्शम्भुकोपहा शम्भुहास्यभूः ।।१८।।
शम्भुतेजाश्शिवाशोकहारी गौरीसुखावहः । उमाङ्गमलजो गौरीतेजोभूस्स्वर्धुनीभवः ।।१९।।
यज्ञकायो महानादो गिरिवर्ष्मा शुभाननः । सर्वात्मा सर्वदेवात्मा ब्रह्ममूर्धा ककुप्छ्रुतिः ।।२०।।
ब्रह्माण्डकुम्भश्चिद्व्योमभालस्सत्यशिरोरुहः । जगज्जन्मलयोन्मेषनिमेषोऽग्न्यर्कसोमदृक् ।।२१।।
गिरीन्द्रैकरदो धमाधर्मोष्ठः सामबृंहितः । ग्रहर्क्षदशनो वाणीजिह्वो वासवनासिकः ।।२२।।
कुलाचलांसस्सोमार्कघण्टो रुद्रशिरोधरः । नदीनदभुजस्सर्पांगुलीकस्तारकानखः ।।२३।।
भ्रूमध्यसंस्थितकरो ब्रह्मविद्यामदोत्कटः । व्योमनाभिः श्रीहृदयो मेरुपृष्ठोऽर्णवोदरः।।२४।।
कुक्षिस्थयक्षगन्धर्वरक्षःकिन्नरमानुषः । पृथ्वीकटिस्सृष्टिलिङ्गः शैलोरुर्दस्रानुकः ।।२५।।
पाताळजङ्घो मुनिपात्कालाङ्गुष्ठस्त्रयीतनुः । ज्योतिर्मण्डललाङ्गूलो हृदयालाननिश्चलः ।।२६।।
हृत्पद्मकर्णिकाशालि वियत्केळिसरोवरः । सद्भक्तध्याननिगडः पूजावारीनिवारितः ।।२७।।
प्रतापी कश्यपसुतो गणपो विष्टपी बली । यशस्वी धार्मिकस्स्वोजाः थमःप्रथमे प्रमथेश्वरः।।२८।।
चिन्तामणिद्वीपपतिः कल्पद्रुमवनालयः । रत्नमण्डपमध्यस्थो रत्नसिंहासनाश्रयः ।।२९।।
तीव्राशिरोधृतपदो ज्वालिनीमौळिलालितः । नन्दानन्दितपीठश्री र्भोगदाभूषितासनः ।।३०।।
सकामदायिनीपीठः स्फुरदुग्रासनाश्रयः । तेजोवतीशिरोरत्नंस्सत्यानित्यावतंसितः ।।३१।।
सविघ्ननाशिनीपीठस्सर्वशक्त्यम्बुजाश्रयः । लिपिपद्मासनाधारो वह्निधामत्रयाश्रयः ।।३२।।
उन्नतप्रपदो गूढगुल्फस्संवृतपार्ष्णिकः । पीनजङ्घश्श्लिष्टजानुः स्थूलोरुःपो नमत्कटिः।।३३।।

निम्ननाभिः स्थूलकुक्षिः पीनवक्षा बृहद्भुजः । पीनस्कन्धो कम्बुकण्ठो लम्बोष्ठो लम्बनासिकः ।।३४।।
भग्नवामरदस्तुङ्गसव्यदंतो महाहनुः । ह्रस्वनेत्रत्रयश्शूर्पकर्णो निबिडमस्तकः ।।३५।।
स्तम्बकाकारकुम्भाग्रो रत्नमौळिर्निरङ्कुशः । सर्पहारकटीसूत्रस्सर्पयज्ञोपवीतवान् ।।३६।।
सर्पकोटीरकटकः सर्पग्रैवेयकाङ्गदः । सर्पकक्ष्योदराबन्धः सर्पराजोत्तरीयकः ।।३७।।
रक्तोरक्ताम्बरधरो रक्तमाल्यविभूषणः । रक्तेक्षणो रक्तकरो रक्तताल्वोष्ठपल्लवः ।।३८।।
श्वेतःश्वेताम्बरधरः श्वेतमाल्यविभूषणः । श्वेतातपत्ररुचिरश्श्वेतचामरवीजितः ।।३९।।
सर्वावयवसम्पूर्णसर्वलक्षणलक्षितः । सर्वाभरणशोभाढ्यस्सर्वशोभासमन्वितः ।।४०।।
सर्वमङ्गळमाङ्गल्यस्सर्वकारणकारणम् । सर्वदैककरश्शार्ङ्गीबीजपूरीगदाधरः ।।४१।।
इक्षुचापधरश्शूली चक्रपाणिस्सरोजभृत् । पाशी धृतोत्पलश्शालीमञ्जरीभृत्स्वदन्तभृत् ।।४२।।
कल्पवल्लीधरो विश्वाभयदैककरो वशी । अक्षमालाधरो ज्ञानमुद्रावान्मुद्गरायुधः ।।४३।।
पूर्णपात्री कम्बुधरो विधृतालिसमुद्गकः । मातुलिङ्गधरश्चूतकलिकाभृत्कुठारवान् ।।४४।।
पुष्करस्थस्वर्णघटीपूर्णरत्नाभिवर्षकः । भारतीसुन्दरीनाथो विनायकरतिप्रियः ।।४५।।
महालक्ष्मीप्रियतमः सिद्धलक्ष्मीमनोरमः । रमारमेशपूर्वाङ्गो दक्षिणोमामहेश्वरः ।।४६।।
महीवराहवामाङ्गो रतिकन्दर्पपश्चिमः । आमोद मोदजननस्सप्रमोदप्रमोदनः ।।४७।।
समेधितसमृद्धश्रीः ऋद्धिसिद्धिप्रवर्तकः । दत्तसौमुख्यसुमुखः कान्तिकन्दलिताश्रयः ।।४८।।
मदनावत्याश्रिताङ्घ्रिः कृतदौर्मुख्यदुर्मुखः । विघ्नसम्पल्लवोपघ्नः सेवोन्निद्रमदद्रवः ।।४९।।
विघ्नकृन्निघ्नचरणो द्राविणीशक्तिसत्कृतः । तीव्राप्रसन्ननयनो ज्वालिनीपलितैकदृक् ।।५०।।
मोहिनीमोहनो भोगदायिनीकान्तिमण्डितः । कामिनीकान्तवक्त्रश्रीरधिष्ठितवसुन्धरः ।।५१।।
वसुंधरा मदोन्नद्ध महाशङ्खनिधिप्रभुः । नमद्वसुमतीमौळिमहापद्मनिधिप्रभुः ।।५२।।
सर्वसद्गुरुसंसेव्यश्शोचिष्केशहृदाश्रयः । ईशानमूर्धा देवेन्द्रशिखा पवननन्दनः ।।५३।।
अग्र प्रत्यग्रनयनो दिव्यास्त्राणां प्रयोगवित् । ऐरावतादिसर्वाशावारणावरणप्रियः ।।५४।।
वज्राद्यस्त्रपरीवारो गणचण्डसमाश्रयः । जयोजयपरीवारो विजयोविजयावहः ।।५५।।
अजितार्चितपादाब्जो नित्यानित्यावतंसितः । विलासिनीकृतोल्लासश्शौण्डीसौन्दर्यमण्डितः ।।५६।।
अनन्तानन्तसुखदस्सुमङ्गळसुमङ्गळः । इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिनिषेवितः ।।५७।।
सुभगासंश्रितपदो ललिताललिताश्रयः । कामिनीकामनः काममानिनीकेळिलालितः ।।५८।।
सरस्वत्याश्रयो गौरीनन्दनः श्रीनिकेतनः । गुरुगुप्तपदो वाचासिद्धो वागीश्वरीपतिः ।।५९।।
नळिनीकामुको वामारामोज्येष्ठामनोरमः । रौद्रीमुद्रितपादाब्जो हुम्बीजस्तुङ्गशक्तिकः ।।६०।।

विश्वादिजननत्राणः स्वाहाशक्तिस्सकीलकः । अमृताब्धिकृतावासो मदघूर्णितलोचनः ।।६१।।
उच्छिष्टगण उच्छिष्टगणेशो गणनायकः । सार्वकालिकसंसिद्धि नित्यशैवोदिगम्बरः ।।६२।।
अनपायोऽनन्तदृष्टिरप्रमेयोऽजरामरः । अनाविलोऽप्रतिरथो ह्यच्युतोऽमृतक्षरमम् ।।६३।।
अप्रतर्क्योऽक्षयोऽजय्यो ऽनाधारोऽनामयोऽमलः। अमोघसिद्धिरद्वैत मघोरोऽप्रमिताननः ।।६४।।
अनाकारोऽब्धिभूम्यग्निबलघ्नोऽव्यक्तलक्षणः। आधारपीठ आधार आधाराधेयवर्जितः ।।६५।।
आखुकेतन आशापूरकआखुमहारथः । इक्षुसागरमध्यस्थः इक्षुभक्षणलालसः ।।६६।।
इक्षुचापातिरेकश्री रिक्षुचापनिषेवितः । इन्द्रगोपसमानश्रीरि इन्द्रनीलसमद्युतिः ।।६७।।
इन्दीवरदळश्याम इन्दुमण्डलनिर्मलः । इध्मप्रिय इडाभाग इडाधामेन्दिराप्रियः ।।६८।।
इक्ष्वाकुविघ्नविध्वंसी इति कर्तव्यतेप्सितः । ईशानमौळिरीशान ईशानसुत ईतिहा ।।६९।।
ईषणात्रयकल्पान्त ईहामात्रविवर्जितः । उपेन्द्र उडुभृन्मौळि रुंडेरकबलिप्रियः ।।७०।।
उन्नतानन उत्तुङ्ग उदारत्रिदशाग्रणीः । ऊर्जस्वाष्मलमद ऊहापोहदुरासदः ।।७१।।
ऋग्यजुस्सामसम्भूतिर्ऋद्धिसिद्धिदायर्तकः । ऋजुचित्तैकसुलभ ऋणत्रयविमोचकः ।।७२।।
स्वभक्तलुप्तविघ्नः लुप्तशक्तिः सुरद्विषाम् । विर्मुखार्चानांविलुप्तश्रीर्लूताविस्फोटनाशनः ।।७३।।
एकारपीठमध्यस्थ एकपादकृतासनः । एजिताखिलदैत्यश्रीरे धिताखिलसंश्रयः ।।७४।।
ऐश्वर्यनिधिरैश्वर्यमैहिकामुष्मिकप्रदः । ऐरंमदसमोन्मेष ऐरावतनिभाननः ।।७५।।
ओङ्कारवाच्य ओङ्कार ओजस्वानोषधीपतिः । औदार्यनिधिरौद्धत्यधुर्य औन्नत्यनस्वनः ।।७६।।
सुरनागानामङ्कुश स्सुरविद्विषाम्अंकुशः । अःसमस्तविसर्गांतपदेषु परिकीर्तितः ।।७७।।
कमण्डलुधरः कल्पः कपर्दी कलभाननः । कर्मसाक्षी कर्मकर्ता कर्माकर्मफलप्रदः ।।७८।।
कदम्बगोलकाकारः कूष्माण्डगणनायकः । कारुण्यदेहःकपिलः कथकः कटिसूत्रभृत् ।।७९।।
खर्वः खड्गप्रियः खड्ग खातान्तस्थः खनिर्मलः। खल्वाटशृङ्गनिलयः खट्वाङ्गी खदुरासदः ।।८०।।
गुणाढ्यो गहनोगस्थ गद्यपद्यसुधार्णवः । गद्यगानप्रियो गर्जो गीतगीर्वाणपूर्वजः ।।८१।।
गुह्याचाररतो गुह्यो गुह्यागमनिरूपितः । गुहाशयो गुहाब्धिस्थो गुरुगम्यो गुरोर्गुरुः ।।८२।।
घण्टाघर्घरिकामाली घटकुम्भो घटोदरः । चण्डश्चण्डीश्वरसुहृी चण्डेशश्चण्डविक्रमः ।।८३।।
चराचरपिता चिन्तामणिचर्वणलालसः । छन्दश्छन्दोवपुश्छन्दो दुर्लक्ष्यश्छन्दविग्रहः ।।८४।।
जगद्योनिर्जगत्साक्षी जगदीशो जगन्मयः । जपो जपपरो जप्योजिह्वासिंहासनप्रभुः ।।८५।।
झलज्झल्लोलसद्दानझङ्कारिभ्रमराकुलः । टङ्कारस्फार संरावानुकारिमणिनूपुरः ।।८६।।
तापत्रयनिवारी च सर्वमन्त्रैकसिद्धिदः । डिण्डिमुण्डो डाकिनीशो डामरो डिण्डिमप्रियः ।।८७।।

ढक्कानिनादमुदितो ढौको ढुण्ढिविनायकः । तत्त्वानां परमस्तत्वज्ञेयस्तत्वनिरूपितः ।।८८।।
तारकान्तरसम्स्थानस्तारकस्तारकान्तकः । स्थाणुः स्थाणुप्रियः स्थाता स्थावरो जङ्गमो जगत् ।।८९।।
दक्षयज्ञप्रमथनो दाता दानवमोहनः । दयावान्दिव्यविभवो दण्डहृद्दण्डनायकः ।।९०।।
दन्तप्रभिन्नाभ्रमलो दैत्यवारणदारणः । दंष्ट्रालग्नद्विपघटो देवार्थनृगजाकृतिः ।।९१।।
धनधान्यपतिर्धन्यो धनदो धरणीधरः । ध्यानैकप्रकटो ध्येयः ध्यानो ध्यानपरायणः ।।९२।।
नन्द्यो नन्दिप्रियो नादो नदमध्यप्रतिष्ठितः । निष्कळो निर्मलो नित्यो नित्यानित्यो निरामयः ।।९३।।
परंव्योमा परन्धामा परमात्मा परम्पदः । परात्परः पशुपतिः पूर्णमोदकसारवान् ।।९४।।
पूर्णानन्दः परानन्दः पुराणपुरुषोत्तमः । पद्मप्रसन्ननयनः प्रणताज्ञानमोचनः ।।९५।।
प्रमाणप्रत्ययातीतः प्रणतार्तिनिवारणः । फलहस्तः फणिपतिः फेत्कारफणितप्रियः ।।९६।।
बाणार्चिताङ्घ्रियुगळो वाणकेळिकुतूहली । ब्रह्मा ब्रह्मार्चितपदो ब्रह्मचारी बृहस्पतिः ।।९७।।
बृहत्तमो ब्रह्मपरो ब्रह्मण्यो ब्रह्मवित्प्रियः । बृहन्नादाग्र्यचीत्कारो ब्रह्माण्डावलिमेखलः ।।९८।।
भ्रूक्षेपदत्त लक्ष्मीको भर्गो भद्रो भयापहः। भगवान्भक्तिसुलभो भूतिदो भूतिभूषणः ।।९९।।
भव्यो भूतालयो भोगदाता भ्रूमध्यगोचरः । मन्त्रो मन्त्रपतिर्मन्त्री मदमत्तमनोरमः ।।१००।।
मेखलावान्मन्दगतिः मतिमत्कमलेक्षणः । महाबलो महावीरो महाप्राणमहामनाः ।।१०१।।
यज्ञो यज्ञपतिर्यज्ञगोप्ता यज्ञफलप्रदः । यशस्करो योगगम्यो याज्ञिको याजकप्रियः।।१०२।।
रसो रसप्रियो रस्यो रञ्जको रावणार्चितः । रक्षोरक्षाकरो रत्नगर्भो राज्यसुखप्रदः ।।१०३।।
लक्षो लक्षप्रदो लक्ष्यो लयस्थो लड्डुकप्रियः। लास्यप्रियो लास्यपदो लाभकृल्लोकविश्रुतः ।।१०४।।
वरेण्यो वह्निवदनो वन्द्यो वेदान्तगोचरः। विकर्ता विश्वतश्चक्षुः विधाता विश्वतोमुखः।।१०५।।
वामदेवो विश्वनेता वज्री वज्रनिवारणः । विश्वबन्धन विष्कम्भधारो विश्वामरप्रभुः ।।१०६।।
शब्दब्रह्म शमप्राप्यो शम्भुशक्ति गणेश्वरः । शास्ताशिखाग्रनिलयो शरण्यः शिखरीश्वरः ।।१०७।।
षड्तुकुसुमस्त्रग्वी षडाधारः षडक्षरः । संसारवैद्यस्सर्वज्ञः सर्वभेषजभेषजः ।।१०८।।
सृष्टिस्थितिलयक्रीडस्सुरकुञ्जरभेदनः । सन्दूरितमहाकुम्भस्सदसद्व्यक्तिदायकः ।।१०९।।
साक्षी समुद्रमथनः स्वसंवेद्यः स्वदक्षिणः । स्वतन्त्रस्सत्यसङ्कल्पस्सामगानरतस्सुखी ।।११०।।
हंसो हस्तिपिशाचीशो हवनो हव्यकव्यभुक्। हव्यो हतप्रियो हर्षो हृल्लेखामन्त्रमध्यगः।।१११।।
क्षेत्राधिपः क्षमाभर्ता क्षमापरपरायणः । क्षिप्रक्षेमकरः क्षेमानन्दः क्षोणीसुरद्रुमः ।।११२।।
धर्मप्रदोऽर्थदः कामदाता सौभाग्यवर्धनः । विद्याप्रदो विभवदो भुक्तिमुक्तिफलप्रदः ।।११३।।
आभिरूप्यकरो वीरश्रीप्रदो विजयप्रदः । सर्ववश्यकरो गर्भदोषहा पुत्रपौत्रदः ।।११४।।

मेधादः कीर्तिदश्शोकहारी दौर्भाग्यनाशनः । प्रतिवादिमुखस्तम्भो दुष्टचित्तप्रसादनः ।।११५।।
पराभिचारशमनो दुःखभञ्जनकारकः । लवस्त्रुटिः कळा काष्ठा निमेषो घटिमुहूर्तकः ।।११६।।
प्रहरश्च दिवा नक्तः अहोरात्र अहर्निशम् । पक्षो मासायनो वर्षाः युगः कल्पो महालयः ।।११७।।
राशिस्तारातिथिर्योगः वारः करण अंशकः । लग्नो होरा कालचक्रो मेरुस्सप्तर्षयो ध्रुवः ।।११८।।
राहुर्मन्दः कविर्जीवः बुधो भौमश्शशी रविः । कालः सृष्टिस्थितिर्विश्वः स्थावरो जङ्गमो जगत् ।।११९।।
भूरापोग्निर्मरुद्व्योमा अहंकृत्प्रकृतिः पुमान् । ब्रह्मा विष्णुश्शिवो रुद्रईशश्शक्तिस्सदाशिवः ।।१२०।।
त्रिदशाः पितरस्सिद्धा यक्षा रक्षाश्च किन्नराः । साध्या विद्याधराभूताः मनुष्याः पशवः खगाः ।।१२१।।
समुद्रास्सरितश्शैलाः भूतो भव्यो भरोद्भवः । साङ्ख्यः पातञ्जलो योगः पुराणश्च श्रुतिः स्मृतिः ।।१२२।।
वेदाङ्गाश्च सदाचारः मीमांसा न्यायविस्तरः । आयुर्वेदो धनुर्वेदो गान्धर्वः काव्यनाटकः ।।१२३।।
वैखानसो भागवतो मानुषः पाञ्चरात्रकः । शैवः पाशुपतः कालमुखो भैरवशासनः ।।१२४।।
शाक्तो वैनायकस्सौरो जैनघूर्हतसंहितः । सदसद्व्यक्त अव्यक्तस्सचेतनअचेतनः ।।१२५।।
बन्धो मोक्षस्सुखो भोगो योगस्सत्य अणुर्महत् । स्वस्ति हुंरूपषड्रूपखड्गभूश्च स्वधामयः ।।१२६।।
स्वाहारूपः श्रौषड्रूपो वौषड्रूपो वषणमयः । ज्ञानविज्ञान आनन्दो बोधस्संविच्छमो यमः ।।१२७।।
एको एकाक्षरो एक एकाक्षरपरायणः । एकाग्रधीरेकवीरो एकानेकस्वरूपधृत् ।।१२८।।
द्विरूपो द्विभुजो द्व्यक्षो द्विरदो द्विपरक्षकः । द्वैमातुरद्विवदनो द्वन्द्वातीतो द्वयातिगः ।।१२९।।
त्रिधामा श्रीकरस्त्रेता त्रिवर्गफलदायकः । त्रिगुणात्मा त्रिलोकादिस्त्रिशक्तीशस्त्रिलोचनः ।।१३०।।
चतुर्बाहुश्चतुर्दन्तश्चतुरात्मा चतुर्मुखः । चतुर्विधोपायकरश्चतुर्विधफलप्रदः ।।१३१।।
चतुराननसम्प्रीतः चतुर्वर्णाश्रमाश्रयः । चतुर्विधवचोवृत्ति परिवृत्तिप्रवर्तकः ।।१३२।।
चतुर्थीपूजनप्रीतश्चतुर्थीतिथिसम्भवः । पञ्चाक्षरात्मा पञ्चात्मा पञ्चास्यः पञ्चकृत्यकृत् ।।१३३।।
पञ्चाधारः पञ्चवर्णः पञ्चाक्षरपरायणः । पञ्चताळः पञ्चकरः पञ्चप्रणवभाविकः ।।१३४।।
पञ्चब्रह्ममयस्फूर्तिः पञ्चावरणवारितः । पञ्चभक्ष्यप्रियः पञ्चबाणः पञ्चशिवात्मकः ।।१३५।।
षट्कोणपीठष्षट्चक्रधामा षड्ग्रन्थिभेदकः । षडध्वध्वान्तविध्वंसी षडङ्गुलमहाह्रदः ।।१३६।।
षण्मुखः षण्मुखभ्राता षट्छक्तिपरिवारितः । षड्वैरिवर्गविध्वंसी षडूर्मिभयभञ्जनः ।।१३७।।
षट्तर्कदूरष्षट्कर्मनिरतः षड्रसाश्रयः । सप्तपाताळचरणः सप्तद्वीपोरुमण्डितः ।।१३८।।
सप्तस्वर्लोकमकुटस्सप्तसप्तिवरप्रदः । सप्ताङ्गराज्यसुखदस्सप्तर्षिगणमण्डितः ।।१३९।।
सप्तछन्दोनिधिस्सप्तहोता सप्तस्वराश्रयः । सप्ताब्धिकेळिकासारस्सप्तमातृनिषेवितः ।।१४०।।
सप्तच्छदामोदमदस्सप्तछन्दोमुखप्रियः । अष्टमूर्तिर्ध्येयमूर्तिरष्टप्रकृतिकारणः ।।१४१।।

अष्टाङ्गयोगफलभुगष्टपत्राम्बुजाननः । अष्टशक्तिसमृद्धश्रीरष्टैश्वर्यप्रदायकः ।।१४२।।
अष्टपीठोपपीठश्रीरष्टमातृसमावृतः । अष्टभैरवसेव्योऽष्टवसुवन्द्योऽष्टमूर्तिभृत् ।।१४३।।
अष्टचक्रस्फुरन्मूर्तिरष्टद्रव्यहविः प्रियः । नवनागासनाध्यासी नवनिध्यनुशासिता ।।१४४।।
नवद्वारघनाधारी नवधारनिकेतनः । नरनारायणस्तुत्यो नवदुर्गानिषेवितः ।।१४५।।
नवनाथमहानाथो नवनागविभूषणः । नवरत्नविचित्राङ्गो नवशक्तिशिरोधृतः ।।१४६।।
दशात्मको दशभुजो दशदिक्पतिवन्दितः । दशाध्यायो दशप्राणो दशेन्द्रियनियामकः ।।१४७।।
दशाक्षरमहामन्त्रो दशाशाव्यापिविग्रहः । एकादशादिरुद्रैस्संस्तुत एकादशाक्षरः ।।१४८।।
द्वादशोद्दण्डदोर्दण्डो द्वादशाङ्कनिकेतनः । त्रयोदशभिदाभिन्नविश्वेदेवाधिदैवतः ।।१४९।।
चतुर्दशेन्द्रप्रभवश्चतुर्दशमनुप्रभुः । चतुर्दशादिविद्याढ्यश्चतुर्दशजगत्प्रभुः ।।१५०।।
सामपञ्चदशः पञ्चदशीशीतांशुनिर्मलः । षोडशाधारनिलयः षोडशस्वरमातृकः ।।१५१।।
षोडशान्तपदावासः षोडशेन्दुकळात्मकः । सप्तसप्तदशी सप्तदशस्सप्तदशाक्षरः ।।१५२।।
अष्टादशद्वीपपतिरष्टादशपुराणकृत् । अष्टादशौषधिस्त्रष्टा अष्टादशमुनिस्मृतः ।।१५३।।
अष्टादशलिपिव्यष्टिसमष्टिज्ञानकोविदः । एकविंशः पुमानेकविंशत्यङ्गुळिपल्लवः ।।१५४।।
चतुर्विंशतितत्त्वात्मा पञ्चविंशाख्यपूरुषः । सप्तविंशतितारेशस्सप्तविंशतियोगकृत् ।।१५५।।
द्वात्रिंशद्भैरवाधीशश्चतुस्त्रिंशन्महाह्रदः । षट्त्रिंशत्तत्वसम्भूतिरष्टत्रिंशत्कळातनुः ।।१५६।।
नमदेकोनपञ्चाशन्मरुद्वर्गनिरर्गळः । पञ्चाशदक्षरश्रेणिः पञ्चाशद्रुद्रविग्रहः ।।१५७।।
पञ्चाशद्विष्णुशक्तीशः पञ्चाशन्मातृकालयः । द्विपञ्चाशद्वपुश्श्रेणिस्त्रिषष्ट्यक्षरसंश्रयः ।।१५८।।
चतुष्षष्ट्यर्णनिर्णेता चतुष्षष्टिकळानिधिः । चतुष्षष्टिमहासिद्धयोगिनीवृन्दवन्दितः ।।१५९।।
अष्टषष्टिमहातीर्थक्षेत्रभैरवभावनः । चतुर्णवतिमन्त्रात्मा षण्णवत्यधिकप्रभुः ।।१६०।।
शतानन्दश्शतमखश्शतपत्रायतेक्षणः । शतानीकश्शतधृतश्शतधारवरायुधः ।।१६१।।
सहस्त्रपत्रनिलयस्सहस्त्रफणिभूषणः । सहस्त्रशीर्षा पुरुषस्सहस्त्राक्षस्सहस्त्रपात् ।।१६२।।
सहस्त्रनामसंस्तुत्यस्सहस्त्राक्षबलापहः । फणामण्डलसाहस्त्रफणिराजकृतासनः ।।१६३।।
दशसाहस्त्रफणभृत्फणिराजकृतासनः । अष्टाशीतिसहस्त्रौघमहर्षिस्तोत्रयन्त्रितः ।।१६४।।
महाकायो महात्मापि चण्डिलश्श्रेष्टदो रसः । आधारोऽसौ वेदमयो हेरम्बस्स्कन्दपूर्वजः ।।१६५।।
लक्षाधीशप्रियाधारो लक्षाधारमनोमयः । चतुर्लक्षजपप्रीतश्चतुर्लक्षप्रकाशितः ।।१६६।।
चतुराशीतिलक्षाणां जीवानां देहसंस्थितः । कोटिसूर्यप्रतीकाशः कोटिचन्द्रांशुनिर्मलः ।।१६७।।
कोटियज्ञप्रमथनः कोटियज्ञफलप्रदः । शिवाभवाद्यष्टकोटिविनायकधुरन्धरः ।।१६८।।

सप्तकोटिमहामन्त्रमन्त्रितावयवद्युतिः । त्रयस्त्रिंशत्कोटिसुरश्रेणीप्रणतपादुकः ।।१६९।।

अनन्तदेवतासेव्यः अनन्तशुभदायकः । अनन्तनामानन्तश्रीरनन्तानन्तसौख्यदः ।।१७०।।

इति श्रीगणेशपुराणे उपासनाखण्डे महागणपति प्रोक्तं गणेशसहस्र नाम स्तोत्रं संपूर्णम्

## श्रीगणेशकवचम्

गौर्युवाच—

एषोऽतिचपलो दैत्यान्बाल्येऽपि नाशयत्यहो। अग्रे किं कर्म कर्तेति न जाने मुनिसत्तम ।।१।।

दैत्या नानाविधा दुष्टाः साधुदेवद्रुहः खलाः। अतोऽस्य कण्ठे किंचित्त्वं रक्षार्थं बद्धुमर्हसि ।।२।।

मुनिरुवाच—

ध्यायेत्सिंहगतं विनायकममुं दिग्बाहुमाद्ये युगे त्रेतायां तु मयूरवाहनममुं षड्बाहुकं सिद्धिदम् ।

द्वापारे तु गजाननं युगभुजं रक्ताङ्गरागं विभुं। तुर्ये तु द्विभुजं सिताङ्गरुचिरं सर्वार्थदं सर्वद।।३।।

विनायकः शिखां पातु परमात्मा परात्परः । अतिसुन्दरकायस्तु मस्तकं सुमहोत्कटः ।।४।।

ललाटं कश्यपः पातु भ्रूयुगं तु महोदरः । नयने मालचन्द्रस्तु गजास्यस्त्वोष्ठपल्लवौ ।।५।।

जिह्वां पातु गणक्रीडश्चिबुकं गिरिजासुतः । वाचं विनायकः पातु दन्तान् रक्षतु दुर्मुखः।।६।।

श्रवणौ पाशपाणिस्तु नासिकां चिन्तितार्थदः। गणेशस्तु मुखं कण्ठं पातु देवो गणञ्जयः ।।७।।

स्कन्धौ पातु गजस्कन्धः स्तनौ विघ्नविनाशनः। हृदयं गणनाथस्तु हेरम्बो जठरं महान् ।।८।।

धराधरः पातु पार्श्वौ पृष्ठं विघ्नहरः शुभः । लिङ्गं गुह्यं सदा पातु वक्रतुण्डो महाबलः ।।९।।

गणक्रीडो जानुजङ्घे ऊरू मङ्गळमूर्तिमान् । एकदन्तो महाबुद्धिः पादौ गुल्फौ सदाऽवतु ।।१०।।

क्षिप्रप्रसादनो बाहू पाणी आशाप्रपूरकः । अङ्गुलीश्च नखान्पातु पद्महस्तोऽरिनाशनः ।।११।।

सर्वाङ्गानि मयूरेशो विश्वव्यापी सदाऽवतु । अनुक्तमपि यत्स्थानं धूम्रकेतुः सदाऽवतु ।।१२।।

आमोदस्त्वग्रतः पातु प्रमोदः पृष्ठतोऽवतु । प्राच्यां रक्षतु बुद्धीश आगनेय्यां सिद्धिदायकः ।।१३।।

दक्षिणस्यामुमापुत्रो नैर्ऋत्यां तु गणेश्वरः । प्रतीच्यां विघ्नहर्ताव्याद्वायव्यां गजकर्णकः ।।१४।।

कौबेर्यां निधिपः पायादीशान्यामीशनन्दनः । दिवाऽव्यादेकदन्तस्तु रात्रौ सन्ध्यासु विघ्नहृत् ।।१५।।

राक्षसासुरवेतालग्रहभूतपिशाचतः । पाशाङ्कुशधरः पातु रजः सत्त्वतमः स्मृतीः ।।१६।।

ज्ञानं धर्मं च लक्ष्मीं च लज्जां कीर्तिं तथा कुलम् । वपुर्धनं च धान्यं च गृहदारान्सुतान्सखीन् ।।१७।।

सर्वायुधधरः पौत्रान् मयूरेशोऽवतात्सदा । कपिलोऽजाविकं पातु गजाश्वान्विकटोऽवतु ।।१८।।
भूर्जपत्रे लिखित्वेदं यः कण्ठे धारयेत्सुधीः । न भयं जायते तस्य यक्षरक्षः पिशाचतः ।।१९।।
त्रिसन्ध्यं जपते यस्तु वज्रसारतनुर्भवेत् । यात्राकाले पठेद्यस्तु निर्विघ्नेन फलं लभेत् ।।२०।।
युद्धकाले पठेद्यस्तु विजयं चाप्नुयादद्रुतम्। मारणोच्चाटनाकर्षस्तम्भमोहनकर्मणि ।।२१।।
सप्तवारं जपेदेतद्दिनानामेकविंशतिम् । तत्तत्फलमवाप्नोति साधको नात्र संशयः ।।२२।।
एकविंशतिवारं च पठेत्तावद्दिनानि यः । कारागृहगतं सद्यो राज्ञा वध्यं च मोचयेत् ।।२३।।
राजदर्शनवेलायां पठेदेतत्त्रिवारतः । स राजानं वशं नीत्वा प्रकृतीश्च सभां जयेत् ।।२४।।
इदं गणेशकवचं कश्यपेन समीरितम् । मुद्गलाय च तेनाथ माण्डव्याय महर्षये ।।२५।।
मह्यं स प्राह कृपया कवचं सर्वसिद्धिदम् । न देयं भक्तिहीनाय देयं श्रद्धावते शुभम् ।।२६।।
अनेनास्य कृता रक्षा न बाधाऽस्य भवेत्क्वचित्। राक्षसासुरवेतालदैत्यदानवसम्भवा ।।२७।।

।।इति श्रीगणेशपुराणे गणेशकवचं समाप्तम्।।

## श्रीगणेशमानसपूजा

गृत्समद उवाच—

विघ्नेश वीर्याणि विचित्रकाणि बन्दीजनैर्मागधकैः स्मृतानि ।
श्रुत्वा समुत्तिष्ठ गजानन त्वं ब्राह्मे जगन्मङ्गलकं कुरुष्व ।।१।।
एवं मया प्रार्थितविघ्नराजश्चित्तेन चोत्थाय बहिर्गणेशः ।
तं निर्गतं वीक्ष्य नमन्ति देवाः शम्भ्वादयो योगिमुखास्तथाहम् ।।२।।
शौचादिकं ते परिकल्पयामि हेरम्ब वै दन्तविशुद्धिमेवम् ।
वस्त्रेण सम्प्रोक्ष्य मुखारविन्दं देवं सभायां विनिवेशयामि ।।३।।
द्विजादिसर्वैरभिवन्दितं च शुकादिभिर्मोदसुमोदकाद्यैः ।
सम्भाष्य चालोक्य समुत्थितं तं सुमण्डपं कल्प्य निवेशयामि ।।४।।
रत्नैः सुदीप्तैः प्रतिबिम्बितं तं पश्यामि चित्तेन विनायकं च ।
तत्रासनं रत्नसुवर्णयुक्तं सङ्कल्प्य देवं विनिवेशयामि ।।५।।
सिद्ध्या च बुद्ध्या सह विघ्नराज पाद्यं कुरु प्रेमभरेण सर्वैः ।
सुवासितं नीरमथो गृहाण चित्तेन दत्तं च सुखोष्णभावम् ।।६।।

ततः सुवस्त्रेण गणेशमादौ सम्प्रोक्ष्य दूर्वादिभिरर्चयामि ।
चित्तेन भावप्रिय दीनबन्धो मनो विलीनं कुरु ते पदाब्जे ।।७।।
कर्पूरतैलादिसुवासितं तु सुकल्पितं तोयमथो गृहाण ।
आचम्य तेनैव गजानन त्वं कृपाकटाक्षेण विलोकयाशु ।।८।।
प्रवालमुक्ताफलहाटकाद्यैः सुसंस्कृतं ह्यन्तरभावकेन ।
अनर्घ्यमर्घ्यं सफलं कुरुष्व मया प्रदत्तं गणराज ढुण्ढे ।।९।।
सौगन्ध्ययुक्तं मधुपर्कमाद्यं सङ्कल्पितं भावयुतं गृहाण ।
पुनस्तथाचम्य विनायकं त्वं भक्तांश्च भक्तेश सुरक्षयाशु ।।१०।।
सुवासितं चम्पकजातिकाद्यैस्तैलं मया कल्पितमेव ढुण्ढे ।
गृहाण तेन प्रविमर्दयामि सर्वाङ्गमेवं तव सेवनाय ।।११।।
ततः सुखोष्णेन जलेन चाहमनेकतीर्थाहृतकेन ढुण्ढिम् ।
चित्तेन शुद्धेन च स्नापयामि स्नानं मया दत्तमथो गृहाण ।।१२।।
ततः पयःस्नानमचिन्त्यभाव गृहाण तोयस्य तथा गणेश ।
पुनर्दधिस्नानमनामयं त्वं चित्तेन दत्तं च जलस्य चैव ।।१३।।
ततो घृतस्नानमपारवन्द्य सुतीर्थजं विघ्नहर प्रसीद ।
गृहाण चित्तेन सुकल्पितं तु ततो मधुस्नानमथो जलस्य ।।१४।।
सुशर्करायुक्तमथो गृहाण स्नानं मया कल्पितमेव ढुण्ढे ।
ततो जलस्नानमघापहन्तृ विघ्नेश मायां मम वारयाशु ।।१५।।
सुयक्षपङ्कस्थमथो गृहाण स्नानं परेशाधिपते ततश्च ।
कौमण्डलीसम्भवजं कुरुष्व विशुद्धमेवं परिकल्पितं तु ।।१६।।
ततस्तु सूक्तैर्मनसा गणेशं सम्पूज्य दूर्वादिभिरल्पभावैः ।
अपारकैर्मण्डलभूतब्रह्मणैरपत्यकैस्तं ह्यभिषेचयामि ।।१७।।
ततः सुवस्त्रेण तु प्रोञ्छनं वै गृहाण चित्तेन मया सुकल्पितम् ।
ततो विशुद्धेन जलेन ढुण्ढे ह्याचान्तमेवं कुरु विघ्नराज ।।१८।।
अग्नौ विशुद्धे तु गृहाण वस्त्रे ह्यनर्घमौल्ये मनसा मया ते ।
दत्ते परिच्छाद्य निजात्मदेहं ताभ्यां मयूरेश जनांश्च पालय ।।१९।।
आचम्य विघ्नेश पुनस्तथैव चित्तेन दत्तं मुखमुत्तरीयम् ।
गृहाण भक्तप्रतिपालक त्वं नमो यथा तारक संयुतं तु ।।२०।।

यज्ञोपवीतं त्रिगुणस्वरूपं सौवर्णमेवं ह्यहिनाथभूतम् ।
भावेन दत्तं गणनाथ तत्त्वं गृहाण भक्तोद्धृतिकारणाय ।।२१।।
आचान्तमेवं मनसा प्रदत्तं कुरुष्व शुद्धेन जलेन ढुण्ढे ।
पुनश्च कौमण्डलकेन पाहि विश्वं प्रभो खेलकरं सदा ते ।।२२।।
उद्यद्दिनेशाभमथो गृहाण सिन्दूरकं ते मनसा प्रदत्तम् ।
सर्वाङ्गसंलेपनमादराद्वै कुरुष्व हेरम्ब च तेन पूर्णम् ।।२३।।
सहस्त्रशीर्षं मनसा मया त्वं दत्तं किरीटं तु सुवर्णजं वै ।
अनेकरत्नैः खचितं गृहाण ब्रह्मेश ते मस्तकशोभनाय ।।२४।।
विचित्ररत्नैः कनकेन ढुण्ढे युतानि चित्तेन मया परेश ।
दत्तानि नानापदकुण्डलानि गृहाण शूर्पश्रुतिभूषणाय ।।२५।।
शुण्डाविभूषार्थमनन्तखेलिन्सुवर्णजं कञ्चुकमागृहाण ।
रत्नैश्च युक्तं मनसा मया यद्दत्तं प्रभो तत्सफलं कुरुष्व ।।२६।।
सुवर्णरत्नैश्च युतानि ढुण्ढे सदैकदन्ताभरणानि कल्प ।
गृहाण चूडाकृतये परेश दत्तानि दन्तस्य च शोभनार्थम् ।।२७।।
रत्नैः सुवर्णेन कृतानि तानि गृहाण चत्वारि मया प्रकल्प्य ।
सम्भूषय त्वं कटकानि नाथ चतुर्भुजेषु ह्यज विघ्नहारिन् ।।२८।।
विचित्ररत्नैः खचितं सुवर्णसम्भूतकं गुह्य मया प्रदत्तम् ।
तमाङ्गुलीष्वङ्गुलीकं गणेश चित्तेन संशोभय तत्परेश ।।२९।।
विचित्ररत्नैः खचितानि ढुण्ढे केयूरकाणि ह्यथ कल्पितानि ।
सुवर्णजानि प्रमथाधिनाथ गृहाण दत्तानि तु बाहुषु त्वम् ।।३०।।
प्रवालमुक्ताफलरत्नजैस्त्वं सुवर्णसूत्रैश्च गृहाण कण्ठे ।
चित्तेन दत्ता विविधाश्च माला उरूदरे शोभय विघ्नराज ।।३१।।
चन्द्रं ललाटे गणनाथ पूर्णं वृद्धिक्षयाभ्यां तु विहीनमाद्यम् ।
संशोभय त्वं वरसंयुतं ते भक्तिप्रिय त्वं प्रकटीकुरुष्व ।।३२।।
चिन्तामणिं चिन्तितदं परेश हृद्देशगं ज्योतिर्मयं कुरुष्व ।
मणिं सदानन्दसुखप्रदं च विघ्नेश दीनार्थद पालयस्व ।।३३।।
नाभौ फणीशं च सहस्त्रशीर्षं संवेष्टनेनैव गणाधिनाथ।
भक्तं सुभूषं कुरु भूषणेन वरप्रदानं सफलं परेश ।।३४।।

कटीतटे रत्नसुवर्णयुक्तां काञ्चीं सुचित्तेन च धारयामि ।
विघ्नेश ज्योतिर्गणदीपनीं ते प्रसीद भक्तं कुरु मां दयाब्धे ।।३५।।
हेरम्ब ते रत्नसुवर्णयुक्ते सुनूपुरे मञ्जिरके तथैव ।
सुकिङ्किणीनादयुते सुबुद्ध्या सुपादयोः शोभय मे प्रदत्ते ।।३६।।
इत्यादि नानाविधभूषणानि तवेच्छया मानसकल्पितानि ।
सम्भूषयाम्येव त्वदङ्गकेषु विचित्रधातुप्रभवाणि ढुण्ढे ।।३७।।
सुचन्दनं रक्तममोघवीर्यं सुघर्षितं ह्यष्टकगन्धमुख्यैः ।
युक्तं मया कल्पितमेकदन्त गृहाण ते त्वङ्गविलेपनार्थम् ।।३८।।
लिप्तेषु वैचित्र्यमथाष्टगन्धैरङ्गेषु तेऽहं प्रकरोमि चित्रम् ।
प्रसीद चित्तेन विनायक त्वं ततः सुरक्तं रविमेव फाले ।।३९।।
घृतेन वै कुङ्कुमकेन रक्तान्सुतण्डुलान्स्ते परिकल्पयामि ।
फाले गणाध्यक्ष गृहाण पाहि भक्तान्सुभक्तिप्रिय दीनबन्धो ।।४०।।
गृहाण भो चम्पकमालतीनि जलपङ्कजानि स्थलपङ्कजानि ।
चित्तेन दत्तानि च मल्लिकानि पुष्पणि नानाविधवृक्षजानि ।।४१।।
पुष्पोपरि त्वं मनसा गृहाण हेरम्ब मन्दारशमीदलानि ।
मया सुचित्तेन च कल्पितानि ह्यपारकाणि प्रणवाकृते तु ।।४२।।
दूर्वाङ्कुरान्वै मनसा प्रदत्तांस्त्रिपञ्चपत्रैर्युतकांश्च स्निग्धान् ।
गृहाण विघ्नेश्वर सङ्ख्यया त्वं हीनांश्च सर्वोपरि वक्रतुण्ड ।।४३।।
दशाङ्गभूतं मनसा मया ते धूपं प्रदत्तं गणराज ढुण्ढे ।
गृहाण सौरभ्यकरं परेश सिद्ध्या च बुद्ध्या सह भक्तपाल ।।४४।।
दीपं सुवर्त्या युतमादरात्ते दत्तं मया मानसकं गणेश ।
गृहाण नानाविधजं घृतादितैलादिसम्भूतममोघदृष्टे ।।४५।।
भोज्यं तु लेह्यं गणराज पेयं चोष्यं च नानाविधषड्रसाढ्यम् ।
गृहाण नैवेद्यमतो मया ते सुकल्पितं पुष्टिपते महात्मन् ।।४६।।
सुवासितं भोजनमध्यभागे जलं मया दत्तमथो गृहाण ।
कमण्डलुस्थं मनसा गणेश पिवस्व विश्वादिकतृप्तिकारिन् ।।४७।।
ततः करोद्वर्तनकं गृहाण सौगन्ध्ययुक्तं मुखमार्जनाय ।
सुवासितेनैव सुतीर्थजेन सुकल्पितं नाथ गृहाण ढुण्ढे ।।४८।।

पुनस्तथाचम्य सुवासितं च दत्तं मया तीर्थजलं पिवस्व ।
प्रकल्प्य विघ्नेश ततः परं ते सम्प्रोञ्छनं हस्तमुखे करोमि ।।४९।।
द्राक्षादिरम्भाफलचूतकानि खार्जूरकार्कन्धुकदाडिमानि ।
सुस्वादयुक्तानि मया प्रकल्प्य गृहाण दत्तानि फलानि ढुण्ढे ।।५०।।
पुनर्जलेनैव करादिकं ते सङ्क्षालयेऽहं मनसा गणेश ।
सुवासितं तोयमथो पिवस्व मया प्रदत्तं मनसा परेश ।।५१।।
अष्टाङ्गयुक्तं गणनाथ दत्तं ताम्बूलकं ते मनसा मया वै ।
गृहाण विघ्नेश्वर भावयुक्तं सदासकृत्तुण्डविशोधनार्थम् ।।५२।।
ततो मया कल्पितके गणेश महासने रत्नसुवर्णयुक्ते ।
मन्दारकूर्पासकयुक्तवस्त्रैरनर्घ्यसञ्छादितके प्रसीद ।।५३।।
ततस्त्वदीयावरणं परेश सम्पूजयेऽहं मनसा यथावत् ।
नानोपचारैः परमप्रियैस्तु त्वत्प्रीतिकामार्थमनाथबन्धो ।।५४।।
गृहाण लम्बोदर दक्षिणां ते ह्यसङ्ख्यभूतां मनसा प्रदत्ताम् ।
सौवर्णमुद्रादिकमुख्यभावां पाहि प्रभो विश्वमिदं गणेश ।।५५।।
राजोपचारान्विविधान्गृहाण हस्त्यश्वछत्रादिकमादराद्वै ।
चित्तेन दत्तान् गणनाथ ढुण्ढे ह्यपारसङ्ख्यान् स्थिरजङ्गमांस्ते ।।५६।।
दानाय नानाविधरूपकांस्ते गृहाण दत्तान्मनसा मया वै ।
पदार्थभूतान् स्थिरजंगमांश्च हेरम्ब मां तारय मोहभावात् ।।५७।।
मन्दारपुष्पाणि शमीदलानि दूर्वाङ्कुरांस्ते मनसा ददामि ।
हेरम्ब लम्बोदर दीनपाल गृहाण भक्तं कुरु मां पदे ते ।।५८।।
ततो हरिद्रामबिरं गुलालं सिन्दूरकं ते परिकल्पयामि ।
सुवासितं वस्तु सुवासभूतैर्गृहाण ब्रह्मेश्वर शोभनार्थम् ।।५९।।
ततः शुकाद्याः शिवविष्णुमुख्या इन्द्रादयः शेषमुखस्तथान्ये ।
मुनीन्द्रकाः सेवकभावयुक्ताः सभासनस्थं प्रणमन्ति ढुण्ढिम् ।।६०।।
वामाङ्गके शक्तियुता गणेशं सिद्धिस्तु नानाविधसिद्धिभिस्तम् ।
अत्यन्तभावेन सुसेवते तु मायास्वरूपा परमार्थभूता ।।६१।।
गणेश्वरं दक्षिणभागसंस्था बुद्धिः कलाभिश्च सुबोधिकाभिः ।
विद्याभिरेवं भजते परेश मायासु साङ्ख्यप्रदचित्तरूपाः ।।६२।।

प्रमोदमोदादय एव पृष्ठे गणेश्वरं भावयुता भजन्ते ।
भक्तेश्वरा मुद्गलशम्भुमुख्याः शुकादयस्तं स्म पुरो भजन्ते ।।६३।।
गन्धर्वमुख्या मधुरं जगुश्च गणेश गीतं विविधस्वरूपम् ।
नृत्यं कलायुक्तमथो पुरस्ताच्चक्रुस्तथा ह्यप्सरसो विचित्रम् ।।६४।।
इत्यादिनानाविधभावयुक्तैः संसेवितं विघ्नपतिं भजामि ।
चित्तेन बुध्वा तु निरञ्जनं वै करोमि नानाविधदीपयुक्तम् ।।६५।।
चतुर्भुजं पाशधरं गणेशं तथाङ्कुशं दन्तयुतं तमेवम् ।
त्रिनेत्रयुक्तं स्वभयङ्करं तं महोदरं चैकरदं गजास्यम् ।।६६।।
सर्पोपवीतं गजकर्णधारं विभूतिभिः सेवितपादपद्मम् ।
ध्याये गणेशं विविधप्रकारैः सुपूजितं शक्तियुतं परेशम् ।।६७।।
ततो जपं वै मनसा करोमि स्वमूलमन्त्रस्य विधानयुक्तम् ।
असङ्ख्यभूतं गणराज हस्ते समर्पयाम्येव गृहाण ढुण्ढे ।।६८।।
आरात्रिकां कर्पूरकमादिभूतामपारदीपां प्रकरोमि पूर्णाम् ।
चित्तेन लम्बोदर तां गृहाण ह्यज्ञानध्वान्ताघहरां निजानाम् ।।६९।।
वेदेषु वैघ्नेश्वरकैः सुमन्त्रैः सुमन्त्रितं पुष्पदलं प्रभूतम् ।
गृहाण चित्तेन मया प्रदत्तमपारवृत्त्या त्वथ मन्त्रपुष्पम् ।।७०।।
अपारवृत्त्या स्तुतिमेकदन्त ग्रहाण चित्तेन कृतां गणेश ।
युक्तां श्रुतिस्मार्तभवैः पुराणैः सर्वैः परेशाधिपते मया ते ।।७१।।
प्रदक्षिणा मानसकल्पितास्ता गृहाण लम्बोदर भावयुक्ताः ।
सङ्ख्या विहीना विविधस्वरूपा भक्तान्सदा रक्ष भवार्णवाद्वै ।।७२।।
नतिं ततो विघ्नपते गृहाण साष्टाङ्गकाद्यां विविधस्वरूपाम् ।
सङ्ख्याविहीनां मनसा कृतां ते सिद्ध्या च बुद्ध्या परिपालयाशु।।७३।।
न्यूनातिरिक्तं तु मया कृतं चेत्तदर्थमन्ते मनसा गृहाण ।
दूर्वाङ्कुरान्विघ्नपते प्रदत्तान् सम्पूर्णमेवं कुरु पूजनं मे ।।७४।।
क्षमस्व विघ्नाधिपते मदीयान् सदापराधान् विविधस्वरूपान् ।
भक्तिं मदीयां सफलां कुरुष्व सम्प्रार्थयेऽहं मनसा गणेश ।।७५।।
ततः प्रसन्नेन गजाननेन दत्तं प्रसादं शिरसाभिवन्द्य ।
स्वमस्तके तं परिधारयामि चित्तेन विघ्नेश्वरमानतोऽस्मि ।।७६।।

उत्थाय विघ्नेश्वर एव तस्माद्गतस्ततस्त्वन्तरधानशक्त्या ।
शिवादयस्तं प्रणिपत्य सर्वे गताः सुचित्तेन च चिन्तयामि ।।७७।।
सर्वान्नमस्कृत्य ततोऽहमेव भजामि चित्तेन गणाधिपं तम् ।
स्वस्थानमागत्य महानुभावैर्भक्तैर्गणेशस्य च खेलयामि ।।७८।।
एवं त्रिकालेषु गणाधिपं तं चित्तेन नित्यं परिपूजयामि ।
तेनैव तुष्टः प्रददातु भावं विश्वेश्वरो भक्तिमयं तु मह्यम् ।।७९।।
गणेशपादोदकपानकं च उच्छिष्टगन्धस्य सुलेपनं तु ।
निर्माल्यसन्धारणकं सुभोज्यं लम्बोदरस्यास्तु हि भुक्तशेषम् ।।८०।।
यं यं करोम्येव तदेव दीक्षागणेश्वरस्यास्तु सदा गणेश ।
प्रसीद नित्यं तव पादभक्तं कुरुष्व मां ब्रह्मपते दयालो ।।८१।।
ततस्तु शय्यां परिकल्पयामि मन्दारकूर्पासकवस्त्रयुक्ताम् ।
सुवासपुष्पादिभिरर्चितां ते गृहाण निद्रां कुरु विघ्नराज ।।८२।।
सिद्ध्या च बुद्ध्या सहितं गणेशं सुनिद्रितं वीक्ष्य तथाहमेव ।
गत्वा स्ववासं च करोमि निद्रां ध्यात्वा हृदि ब्रह्मपतिं तदीयः ।।८३।।
एतादृशं सौख्यममोघशक्ते देहि प्रभो मानसजं गणेश ।
मह्यं च तेनैव कृतार्थरूपो भवामि भक्तिरसलालसोऽहम् ।।८४।।

गार्ग्य उवाच—

एवं नित्यं महाराज गृत्समदो महायशाः ।
चकार मानसीं पूजां योगीन्द्राणां गुरुः स्वयम् ।।८५।।
य एतां मानसीं पूजां करिष्यति नरोत्तमः ।
पठिष्यति सदा सोऽपि गाणपत्यो भविष्यति ।।८६।।
श्रावयिष्यति यो मर्त्यः श्रोष्यते भावसंयुतः ।
स क्रमेण महीपाल ब्रह्मभूतो भविष्यति ।।८७।।
यद्यदिच्छति तत्तद्वै सफलं तस्य जायते ।
अन्ते स्वानन्दगः सोऽपि योगिवन्द्यो भविष्यति ।।८८।।

।।इति श्रीमदान्त्ये मौद्गल्ये मानसपूजा समाप्ता।।

## श्रीगणेशबाह्यपूजा

ऐल उवाच—

बाह्यपूजां वद विभो गृत्समदप्रकीर्तिताम् । तेन मार्गेण विघ्नेशं भजिष्यसि निरन्तरम् ।।१।।

गार्ग्य उवाच—

आदौ च मानसीं पूजां कृत्वा गृत्समदो मुनिः । बाह्यां चकार विधिवत्तां शृणुष्व सुखप्रदाम्।।२।।

हृदि ध्यात्वा गणेशानं परिवारादिसंयुतम्। नासिकारन्ध्रमार्गेण तं बाह्याङ्गं चकार ह ।।३।।

आदौ वैदिकमन्त्रं स गणानान्त्वेति सम्पठन् । पश्चाच्छ्लोकं समुच्चार्य पूजयामास विघ्नपम् ।।४।।

गृत्समद उवाच—

चतुर्बाहुं त्रिनेत्रं च गजास्यं रक्तवर्णकम्। पाशाङ्कुशादिसंयुक्तं मायायुक्तं प्रचिन्तयेत् ।।५।।

आगच्छ ब्रह्मणां नाथ सुरासुरवरार्चित। सिद्धिबुद्ध्यादिसंयुक्त भक्तिग्रहणलालस ।।६।।

कृतार्थोऽहं कृतार्थोऽहं तवागमनतः प्रभो। विघ्नेशानुगृहीतोऽहं सफलो मे भवोऽभवत् ।।७।।

रत्नसिंहासनं स्वामिन् गृहाण गणनायक। तत्रोपविश्य विघ्नेश रक्ष भक्तान्विशेषतः ।।८।।

सुवासिताभिरद्भिश्च पादप्रक्षालनं प्रभो। शीतोष्णाम्भः करोमि ते गृहाण पाद्यमुत्तमम् ।।९।।

सर्वतीर्थाहृतं तोयं सुवासितं सुवस्तुभिः। आचमनं च तेनैव कुरुष्व गणनायक ।।१०।।

रत्नप्रवालमुक्ताद्यैरनर्घैः संस्कृतं प्रभो। अर्घ्यं गृहाण हेरम्ब द्विरदानन तोषकम् ।।११।।

दधिमधुघृतैर्युक्तं मधुपर्कं गजानन। गृहाण भावसंयुक्तं मया दत्तं नमोऽस्तु ते ।।१२।।

पाद्ये च मधुपर्के च स्नाने वस्त्रोपधारणे। उपवीते भोजनान्ते पुनराचमनं कुरु ।।१३।।

चम्पकाद्यैर्गणाध्यक्ष वासितं तैलमुत्तमम्। अभ्यङ्गं कुरु सर्वेश लम्बोदर नमोऽस्तु ते ।।१४।।

यक्षकर्दमकाद्यैश्च विघ्नेश भक्तवत्सल। उद्वर्तनं कुरुष्व त्वं मया दत्तैर्महाप्रभो ।।१५।।

नानातीर्थजलैर्ढुण्ढे सुखोष्णभावरूपकैः। कमण्डलूद्भवैः स्नानं मया कुरु समर्पितैः ।।१६।।

कामधेनुसमुद्भूतं पयः परमपावनम् । तेन स्नानं कुरुष्व त्वं हेरम्ब परमार्थवित् ।।१७।।

पञ्चामृतानां मध्ये तु जलैः स्नानं पुनः पुनः । कुरु त्वं सर्वतीर्थेभ्यो गङ्गादिभ्यः समाहृतैः।।१८।।

दधि धेनुपयोद्भूतं मलापहरणं परम्। गृहाण स्नानकार्यार्थं विनायक दयानिधे ।।१९।।

धेनोः समुद्भवं ढुण्ढे घृतं सन्तोषकारकम्। महामलापघातार्थं तेन स्नानं कुरु प्रभो।।२०।।

सारघं संस्कृतं पूर्णं मधु मधुरसोद्भवम्। गृहाण स्नानकार्यार्थं विनायक नमोऽस्तु ते।।२१।।

इक्षुदण्डसमुद्भूतां शर्करां मलनाशिनीम्। गृहाण गणनाथ त्वं तया स्नानं समाचर।।२२।।

यक्षकर्दमकाद्यैश्च स्नानं कुरु गणेश्वर। आन्त्यं मलहरं शुद्धं सर्वसौगन्ध्यैककारकम् ।।२३।।
ततो गन्धाक्षतादींश्च दूर्वाङ्कुरान्गजानन। समर्पयामि स्वल्पांस्त्वं गृहाण परमेश्वर।।२४।।
ब्रह्मणस्पत्यसूक्तैश्च ह्येकविंशतिवारकैः। अभिषेकं करोमि त्वं गृहाण द्विरदानन।।२५।।
तत आचमनं देव सुवासितजलेन च। कुरुष्व गणनाथ त्वं सर्वतीर्थभवेन वै।।२६।।
वस्त्रयुग्मं गृहाण त्वमनर्घं रक्तवर्णकम्। लोकलज्जाहरं चैव विघ्ननाथ नमोऽस्तु ते ।।२७।।
उत्तरीयं सुचित्रं वै नभस्ताराङ्कितं यथा। गृहाण सर्वसिद्धीश मया दत्तं सुभक्तितः।।२८।।
उपवीतं गणाध्यक्ष गृहाण च ततः परम्। त्रैगुण्यमयरूपं तु प्रणवग्रन्थिबन्धनम् ।।२९।।
ततः सिन्दूरकं देव गृहाण गणनायक। अङ्गलेपनभावार्थं सदानन्दविवर्धनम् ।।३०।।
नानाभूषणकानि त्वमङ्गेषु विविधेषु च। भासुरस्वर्णरत्नैश्च निर्मितानि गृहाण भो ।।३१।।
अष्टगन्धसमायुक्तं गन्धं रक्तं गजानन। द्वादशाङ्गेषु ते ढुण्ढे लेपयामि सुचित्रवत्।।३२।।
रक्तचन्दनसंयुक्तानथवा कुङ्कुमैर्युतान्। हेरतान् विघ्नराज त्वं गृहाण मुखमण्डले ।।३३।।
चकादिसुवृक्षेभ्यः सम्भूतानि गजानन। पुष्पाणि शमिमन्दारदूर्वादीनि गृहाण च ।।३४।।
दशाङ्गं गुग्गुलुं धूपं सर्वसौरभकारकम्। गृहाण त्वं मया दत्तं विनायक महोदर ।।३५।।
नानाजातिभवं दीपं गृहाण गणनायक। अज्ञानमलजं दोषं हरन्तं ज्योतिरूपकम्।।३६।।
चतुर्विधान्नसम्पन्नं मधुरं लड्डुकादिकम्। नैवेद्यं ते मया दत्तं भोजनं कुरु विघ्नप।।३७।।
सुवासितं गृहाणेदं जलं तीर्थसमाहृतम्। भुक्तिमध्ये च पानार्थं देवदेवेश ते नमः।।३८।।
भोजनान्ते करोद्वर्तं यक्षकर्दमकेन च। कुरुष्व त्वं गणाध्यक्ष पिब तोयं सुवासितम् ।।३९।।
दाडिमं खर्जुरं द्राक्षां रम्भादीनि फलानि वै। गृहाण देवदेवेश नानामधुरकाणि तु ।।४०।।
अष्टाङ्गं देव ताम्बूलं गृहाण मुखवासनम्। असकृद्विघ्नराज त्वं मया दत्तं विशेषतः।।४१।।
दक्षिणां काञ्चनाद्यां तु नानाधातुसमुद्भवाम्। रत्नाद्यैः संयुतां ढुण्ढे गृहाण सकलप्रिय ।।४२।।
राजोपचारकाद्यानि गृहाण गणनायक। दानानि तु विचित्राणि मया दत्तानि विघ्नप ।।४३।।
तत आभरणं तेऽहमर्पयामि विधानतः। उपचारैश्च विविधैः तेन तुष्टो भव प्रभो।।४४।।
ततो दूर्वाङ्कुरान्ढुण्ढे एकविंशतिसङ्ख्यकान्। गृहाण न्यूनसिद्ध्यर्थं भक्तवात्सल्यकारणात् ।।४५।।
नानादीपसमायुक्तं नीराजनमघापहन्। गृहाण भावसंयुक्तं सर्वाज्ञानाधिनाशन।।४६।।
गणानां त्वेति मन्त्रस्य जपं साहस्रकं परम्। गृहाण गणनाथ त्वं सर्वसिद्धिप्रदो भव ।।४७।।
आरात्रिकं सुकर्पूरं नानादीपमयं प्रभो। ग्रहाण ज्योतिषां नाथ तथा नीराजयाम्यहम्।।४८।।

पादयोस्ते तु चत्वारि नाभौ द्वे वदने प्रभो । एकं तु सप्तवारं वै सर्वाङ्गेषु निरञ्जनम् ।।४९।।
चतुर्वेदभवैमन्त्रैर्गाणपत्यैर्गजानन । मन्त्रितानि गृहाण त्वं पुष्पपत्राणि विघ्नप ।।५०।।
पञ्चप्रकारकैः स्तोत्रैर्गाणपत्यैर्गणाधिप । स्तौमि त्वां तेन सन्तुष्टो भव भक्तिप्रदायक ।।५१।।
एकविंशतिसङ्ख्यं वा त्रिसङ्ख्यं वा गजानन । प्रादक्षिण्यं गृहाण त्वं ब्रह्मन् ब्रह्मेशभावन ।।५२।।
साष्टाङ्गां प्रणतिं नाथ एकविंशतिसम्मिताम् । हेरम्ब सर्वपूज्य त्वं गृहाण तु मया कृताम् ।।५३।।
न्यूनातिरिक्तभावार्थं किञ्चिद्दूर्वाङ्कुरान्प्रभो । समर्पयामि तेन त्वं साङ्गां पूजां कुरुष्व ताम् ।।५४।।
त्वया दत्तं स्वहस्तेन निर्माल्यं चिन्तयाम्यहम् । शिखायां धारयाम्येव सदा सर्वप्रदं च तत् ।।५५।।
अपराधानसङ्ख्यातान्क्षमस्व गणनायक । भक्तं कुरु च मां ढुण्ढे तव पादप्रियं सदा ।।५६।।
त्वं माता त्वं पिता मे वै सुहृत्सम्बन्धिकादयः । त्वमेव कुलदेवश्च सर्वं त्वं मे न संशयः ।।५७।।
जाग्रत्स्वप्नसुषुप्तिभिर्देहवाङ्मानसैः कृतम् । सांसर्गिकेण यत्कर्म गणेशाय समर्पये ।।५८।।
बाह्यं नानाविधं पापं महोग्रं तल्लयं व्रजेत् । गणेशपादतीर्थस्य मस्तके धारणात्किल ।।५९।।
पादोदकं गणेशस्य पीतं मर्त्येन तत्क्षणात् । सर्वान्तर्गतजं पापं नश्यति गणनातिगम् ।।६०।।
गणेशोच्छिष्टगन्धं वै द्वादशाङ्गेषु चार्चयेत् । गणेशतुल्यरूपः स दर्शनात्सर्वपापहा ।।६१।।
यदा गणेशपूजादौ गन्धभस्मादिकं चरेत् । अथवोच्छिष्टगन्धं तु नो चेत्तत्र विधिं चरेत् ।।६२।।
द्वादशाङ्गेषु विघ्नेशं नाममन्त्रेण चार्चयेत् । तेन सोऽपि गणेशेन समो भवति भूतले ।।६३।।
मूर्ध्नि गाणेश्वरं चादौ ललाटे विघ्ननायकम् । दक्षिणे कर्णमूले तु वक्रतुण्डं समर्चयेत् ।।६४।।
वामे कर्णस्य मूले वै चैकदन्तं समर्चयेत् । कण्ठे लम्बोदरं देवं हृदि चिन्तामणिं तथा ।।६५।।
बाहौ दक्षिणके चैव हेरम्बं वामबाहुके । विकटं नाभिदेशे तुं विघ्ननाथं समर्चयेत् ।।६६।।
कुक्षौ दक्षिणगायां तु मयूरेशं समर्चयेत् । वामकुक्षौ गजास्यं वै पृष्ठे स्वानन्दवासिनम् ।।६७।।
सर्वाङ्गलेपनं शस्तं चित्रितं चाष्टगन्धकैः । गाणेशानां विशेषेण सर्वभद्रस्य कारणात् ।।६८।।
ततः शिष्टं तु नैवेद्यं गणेशस्य भुनज्म्यहम् । भुक्तिमुक्तिप्रदं पूर्णं नानापापनिकृन्तनम् ।।६९।।
गणेशस्मरणेनैव करोमि कालखण्डनम् । गाणपत्यैश्च संवासः सदा मेऽस्तु गजानन ।।७०।।

गार्ग्य उवाच—

एवं गृत्समदश्चैव चकार बाह्यपूजनम् । त्रिकालेषु महायोगी सदा भक्तिसमन्वितः ।।७१।।
तथा कुरु महीपाल गाणपत्यो भविष्यति । यथा गृत्समदः साक्षात्तथा त्वमपि निश्चितम् ।।७२।।

।।इति श्रीमदान्त्ये मौद्गल्ये बाह्यपूजा समाप्ता।।

## श्रीगणेशमहिम्नस्तोत्रम्

अनिर्वाच्यं रूपं स्तवननिकरो यत्र गलितस्तथा वक्ष्ये स्तोत्रं प्रथमपुरुषस्यात्र महतः ।
यतो जातं विश्वं स्थितमपि सदा यत्र विलयः स कीदृग्गीर्वाणः सुनिगमनुतः श्रीगणपतिः ।।१।।
गणेशं गाणेशाः शिवमिति च शैवाश्च विबुधाः रविं सौरा विष्णुं प्रथमपुरुषं विष्णुभजकाः ।
वदन्त्येकं शाक्ता जगदुदयमूलां परशिवां न जाने किं तस्मै नम इति परं ब्रह्म सकलम् ।।२।।
तथेशं यागज्ञा गणपतिमिमं कर्म निखिलं समीमांसा वेदान्तिन इति परं ब्रह्म सकलम् ।
अजां साङ्ख्यो ब्रूते सकलगुणरूपां च सततं प्रकर्तारं न्यायस्त्वथ जगति बौद्धा धियमिति ।।३।।
कथं ज्ञेयो बुद्धेः परतर इयं बाह्यसरणिर्यताधीर्यस्य स्यात्स च तदनुरूपो गणपतिः ।
महत्कृत्यं तस्य स्वयमपि महान् सूक्ष्ममणुवद्ध्वनिर्ज्योतिर्बिन्दुर्गगनसदृशः किञ्च सदसत् ।।४।।
अनेकास्योऽपाराक्षिकरचरणोऽनन्तहृदयस्तथा नानारूपो विविधवदनः श्रीगणपतिः ।
अनन्ताह्वः शक्त्या विविधगुणकर्मैकसमये त्वसङ्ख्यातानन्ताभिमतफलदोऽनेकविषये ।।५।।
न यस्यान्तो मध्यो न च भवति चादिः सुमहतामलिप्तः कृत्वेत्थं सकलमपि खंवत्स च पृथक् ।
स्मृतः संस्मर्तॄणां सकलहृदयस्थः प्रियकरो नमस्तस्मै देवाय सकलसुवन्द्याय महते ।।६।।
गणेशाद्यं बीजं दहनवनितापल्लवयुतं मनुश्चैकार्णोऽयं प्रणवसहितोऽभीष्टफलदः ।
सबिन्दुश्चाङ्गाद्यां गणकऋषिछन्दोऽस्य च निचृत् स देवः प्राग्बीजं विपदपि च शक्तिर्जपकृताम् ।।७।।
गकारो हेरम्बः सगुण इति पुंनिर्गुणमयो द्विधाप्येको जातः प्रकृतिपुरुषो ब्रह्म हि गणः ।
स चेशश्चोत्पत्तिस्थितिलयकरोऽयं प्रमथको यतो भूतं भव्यं भवति पतिरीशो गणपतिः ।।८।।
गकारः कण्ठोर्ध्वं गजमुखसमो मर्त्यसदृशो णकारः कण्ठाधो जठरसदृशाकार इति च ।
अधोभावः कट्यां चरण इति हीशोस्य च तनुर्विभातीत्थं नाम त्रिभुवनसमं भूर्भुवः सुवः ।।९।।
गणेशेति त्र्यर्णात्मकमपि वरं नाम सुखदं सकृत्प्रोच्चैरुच्चारितमिति नृभिः पावनकरम् ।
गणेशस्यैकस्य प्रतिजपकरस्यास्य सुकृतं न विज्ञातो नाम्नः सकलमहिमा कीदृशविधः ।।१०।।
गणेशेत्याह्वं यः प्रवदति मुहुस्तस्य पुरतः प्रपश्यंस्तद्वक्त्रं स्वयमपि गणस्तिष्ठति तदा ।
स्वरूपस्य ज्ञानं त्वमुक इति नाम्नास्य भवति प्रबोधः सुप्तस्य त्वखिलमिह सामर्थ्यममुना ।।११।।
गणेशो विश्वेऽस्मिन्स्थित इह च विश्वं गणपतौ गणेशो यत्रास्ते धृतिमतिरमैश्वर्यमखिलम् ।
समुक्तं नामैकं गणपतिपदं मङ्गलमयं तदेकास्ये दृष्टे सकलविबुधास्येक्षणसमम् ।।१२।।
बहुक्लेशैर्व्याप्तः स्मृत उत गणेशे च हृदये क्षणात्क्लेशान्मुक्तो भवति सहसा त्वभ्रचयवत् ।
वने विद्यारम्भे युधि रिपुभये कुत्र गमने प्रवेशे प्राणान्ते गणपतिपदं चाशु विशति ।।१३।।

गणध्यक्षो ज्येष्ठः कपिल अपरो मङ्गलनिधिर्दयालुर्हेरम्बो वरद इति चिन्तामणिरजः ।
वरानीशो ढुण्ढिर्गजवदननामा शिवसुतो मयूरेशी गौरीतनय इति नामानि पठति ।।१४।।
महेशोऽयं विष्णुः सकविरविरिन्दुः कमलजः क्षितिस्तोयं वह्निः श्वसन इति खं त्वद्रिरुदधिः ।
कुजस्तारः शुक्रो पुरुरुडुबुधोऽगुश्च धनदो यमः पाशी काव्यः शनिरखिलरूपो गणपतिः ।।१५।।
मुखं वह्निः पादौ हरिरपि विधाता प्रजननं रविर्नेत्रे चन्द्रो हृदयमपि कामोऽस्य मदनः ।
करौ शक्रः कट्यामवनिरुदरं भाति दशनं गणेशस्यासन्वै क्रतुमयवपुश्चैव सकलम् ।।१६।।
अनर्घ्यालङ्कारैररुणवसनैर्भूषिततनुः करीन्द्रास्यः सिंहासनमुपगतो भाति बुधराट् ।
स्मितास्यात्तन्मध्येऽप्युदितरविबिम्बोपमरुचिः स्थिता सिद्धिर्वामे मतिरितरगा चामरकरा ।।१७।।
समन्तात्तस्यासन्प्रवरमुनिसिद्धासुरगणाः प्रशंसंतीत्यग्रे विविधनुतिभिः साञ्जलिपुटाः ।
बिडौजाद्यैर्ब्रह्मादिभिरनुवृतो भक्तनिकरैर्गणक्रीडामोदप्रमुदविकटाद्यैः सहचरैः ।।१८।।
वशित्वाद्यष्टाष्टादशदिगखिलाल्लोलमनुवाक् धृतिः पादूः खड्गोञ्जनरसबलाः सिद्धय इमाः ।
सदा पृष्ठे तिष्ठन्त्यनिमिषदृशस्तन्मुखलयाः गणेशं सेवन्तेऽप्यतिनिकटसूपायनकराः ।।१९।।
मृगाङ्कास्या रम्भाप्रभृतिगणिका यस्य पुरतः सुसङ्गीतं कुर्वन्त्यपि कुतुकगन्धर्वसहिताः ।
मुदः पारो नात्रेत्यनुपमपदे दौर्विगलिता स्थिरं जातं चित्तं चरणमवलोक्यास्य विमलम् ।।२०।।
हरेणायं ध्यातस्त्रिपुरमथने चासुरवधे गणेशः पार्वत्या बलिविजयकालेऽपि हरिणा ।
विधात्रा संसृष्टावुरगपतिना क्षोणिधरणे नरैः सिद्धौ मुक्तौ त्रिभुवनजये पुष्पधनुषा ।।२१।।
अयं सुप्रासादे सुर इव निजानन्दभुवने महान् श्रीमानाद्यो लघुतरगृहे रङ्कसदृशः ।
शिवद्वारे द्वाःस्थो नृप इव सदा भूपतिगृहे स्थितो भूत्वोमाङ्के शिशुगणपतिर्लालनपरः ।।२२।।
अमुष्मिन्सन्तुष्टे गजवदन एवापि विबुधे ततस्ते सन्तुष्टास्त्रिभुवनगताः स्युर्बुधगणाः ।
दयालुर्हेरम्बो न च भवति यस्मिंश्च पुरुषे वृथा सर्वं तस्य प्रजननमतः सान्द्रतमसि ।।२३।।
वरेण्यो भ्रूशुण्डिर्भृगुगुरुकुजा मुद्गलमुखा ह्यपारास्तद्भक्ता जपहवनपूजास्तुतिपराः।
गणेशोऽयं भक्तप्रिय इति च सर्वत्र गदितं विभक्तिर्यत्रास्ते स्वयमपि सदा तिष्ठति गणः।।२४।।
भृदः काश्चिद्धातोश्छदविलिखिता वापि दृषदः स्मृता व्याजान्मूर्तिः पथि यदि बहिर्येन सहसा ।
अशुद्धोऽद्धा द्रष्टा प्रवदति तदाह्वां गणपतेः श्रुता शुद्धो मर्त्यो भवति दुरिताद्विस्मय इति ।।२५।।
बहिर्द्वारस्वोर्ध्वं गजवदनवर्ष्मेन्धनमयं प्रशस्तं वा कृत्वा विविधकुशलैस्तत्र निहतम् ।
प्रभावात्तन्मूर्त्या भवति सदनं मङ्गलमयं विलोक्यानन्दस्तां भवति जगतो विस्मय इति ।।२६।।
सिते भाद्रे मासे प्रतिशरदि मध्याह्नसमये मृदो मूर्तिं कृत्वा गणपतितिथौ ढुण्ढिसदृशीम् ।
समर्चत्युत्साहः प्रभवति महान् सर्वसदने विलोक्यानन्दस्तां प्रभवति नृणां विस्मय इति ।।२७।।

तथा ह्येकः श्लोको वरयति महिम्नो गणपतेः कथं स श्लोकेऽस्मिन् स्तुत इति भवेत्सम्प्रपतिते ।
स्मृतं नामास्यैकं सकृदिदमनन्ताह्वयसमं यतो यस्यैकस्य स्तवनसदृशं नान्यदपरम् ।।२८।।
गजवदन विभो यद्वर्णितं वैभवं ते त्विह जनुषि ममेत्थं चारु तद्दर्शयाशु ।
त्वमसि च करुणायाः सागरः कृत्स्नदाताप्यति तव भृतकोऽहं सर्वदा चिन्तकोऽस्मि ।।२९।।
सुस्तोत्रं प्रपठतु नित्यमेतदेव स्वानन्दं प्रति गमनेऽप्ययं सुमार्गः ।
सञ्चिन्त्यं स्वमनसि तत्पदारविंदं स्थाप्याग्रे स्तवनफलं नतीः करिष्ये ।।
गणेशदेवस्य माहात्म्यमेतद्यः श्रावयेद्वापि पठेच्च तस्य ।
क्लेशा लयं यान्ति लभेच्च शीघ्रं स्त्रीपुत्रविद्यार्थगृहं च मुक्तिम् ।।३१।।

।।इति श्रीपुष्पदन्तविरचितं श्रीगणेशमहिम्नास्स्तोत्रं सम्पूर्णम्।।

## श्रीसङ्कटनाशनगणेशस्तोत्रम्

नारद उवाच—

प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम् । भक्तावासं स्मरेन्नित्यमायुः कामार्थसिद्धये ।।१।।
प्रथमं वक्रतुण्डं च एकदन्तं द्वितीयकम् । तृतीयं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम् ।।२।।
लम्बोदरं पञ्चमं च षष्ठं विकटमेव च । सप्तमं विघ्नराजं च धूम्रवर्णं तथाष्टमम् ।।३।।
नवमं भालचन्द्रं च दशमं तु विनायकम् । एकादशं गणपतिं द्वादशं तु गजाननम् ।।४।।
द्वादशैतानि नामानि त्रिसन्ध्यं यः पठेन्नरः । न च विघ्नभयं तस्य सर्वसिद्धिकरं प्रभो ।।५।।
विद्यार्थी लभते विद्यां धनार्थी लभते धनम् । पुत्रार्थी लभते पुत्रान्मोक्षार्थी लभते गतिम् ।।६।।
जपेद्गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत् । संवत्सरेण सिद्धिं च लभते नात्र संशयः ।।७।।
अष्टभ्यो ब्राह्मणेभ्यश्च लिखित्वा यः समर्पयेत् । तस्य विद्या भवेत्सर्वा गणेशस्य प्रसादतः ।।८।।

।।इति श्रीनारदपुराणे सङ्कटनाशनं नाम गणेशस्तोत्रं सम्पूर्णम्।।

## श्रीगणेशाष्टकम्

सर्वे ऊचुः—

यतोऽनन्तशक्तेरनन्ताश्च जीवा यतो निर्गुणादप्रमेया गुणास्ते ।
यतो भाति सर्वं त्रिधा भेदभिन्नं सदा तं गणेशं नमामो भजामः ।।

यतश्चाविरासीज्जगत्सर्वमेतत्तथाब्जासनो विश्वगो विश्वगोप्ता ।
तथेन्द्रादयो देवसङ्घा मनुष्याः सदा तं गणेशं नमामो भजामः ।।
यतो वह्निमान् भवो भूर्जलं च यतः सागराश्चन्द्रमा व्योम वायुः ।
यतः स्थावरा जङ्गमा वृक्षसङ्घाः सदा तं गणेशं नमामो भजामः ।।
यतो दानवाः किन्नरा यक्षसङ्घा यतश्चारणा वारणाः श्वापदाश्च ।
यतः पक्षिकीटा यतो वीरुधश्च सदा तं गणेशं नमामो भजामः ।।
यतो बुद्धिरज्ञाननाशो मुमुक्षोर्यतः सम्पदो भक्तसन्तोषिकाः स्युः ।
यतो विघ्ननाशो यतः कार्यसिद्धिः सदा तं गणेशं नमामो भजामः ।।
यतः पुत्रसम्पद्यतो वाञ्छितार्थो यतोऽभक्तविघ्नास्तथाऽनेकरूपाः ।
यतः शोकमोहौ यतः काम एव सदा तं गणेशं नमामो भजामः ।।
यतोऽनन्तशक्तिः स शेषो बभूव धराधारणेऽनेकरूपे च शक्तः ।
यतोऽनेकधा स्वर्गलोका हि नाना सदा तं गणेशं नमामो भजामः ।।
यतो वेद वाचो विकुण्ठा मनोभिः सदा नेति नेतीति यत्ता गृणन्ति ।
परब्रह्मरूपं चिदानन्दभूतं सदा तं गणेशं नमामो भजामः ।।
पुनरूचे गणाधीशः स्तोत्रमेतत्पठेन्नरः। त्रिसन्ध्यं त्रिदिनं तस्य सर्वकार्यं भविष्यति ।।९।।

।।इति श्रीगणेशपुराणे उपासनाखण्डे श्रीगणेशाष्टकं सम्पूर्णम्।।

## *श्रीगणनायकाष्टकम्*

एकदन्तं महाकायं तप्तकाञ्चनसन्निभम् । लम्बोदरं विशालाक्षं वन्देऽहं गणनायकम्।।१।।
मौञ्जीकृष्णाजिनधरं नागयज्ञोपवीतिनम्। बालेन्दुशकलं मौळौ वन्देऽहं गणनायकम्।।२।।
चित्ररत्नविचित्राङ्गं चित्रमालाविभूषितम् । कामरूपधरं देवं वन्देऽहं गणनायकम्।।३।।
गजवक्त्रं सुरश्रेष्ठं कर्णचामरभूषितम् । पाशाङ्कुशधरं देवं वन्देऽहं गणनायकम् ।।४।।
मूषकोत्तममारुह्य देवासुरमहाहवे । योद्धुकामं महावीर्यं वन्देऽहं गणनायकम्।।५।।
यक्ष-किन्नर-गन्धर्व-सिद्धविद्याधरैस्सदा। स्तूयमानं महाबाहुं वन्देऽहं गणनायकम्।।६।।
अम्बिका हृदयानन्दं मातृभिः परिवेष्टितम्। भक्तप्रियं मदोन्मत्तं वन्देऽहं गणनायकम्।।७।।
सर्वविघ्नहरं देवं सर्वविघ्नविवर्जितम्। सर्वसिद्धिप्रदातारं वन्देऽहं गणनायकम् ।।८।।
गणाष्टकमिदं पुण्यं यः पठेत्सततं नरः। सिद्ध्यन्ति सर्वकार्याणि विद्यावान्धनवान्भवेत्।।९।।

।।इति गणनायकाष्टकं सम्पूर्णम्।।

## एकदन्तस्तोत्रम्

मदासुरं सुशान्तं वै दृष्ट्वा विष्णुमुखाः सुराः ।
भृग्वादयश्च मुनय एकदन्तं समाययुः ।।१।।
प्रणम्य तं प्रपूज्यादौ पुनस्तं नेमुरादरात् ।
तुष्टुवुर्हर्षसंयुक्ता एकदन्तं गणेश्वरम् ।।२।।

देवर्षय ऊचुः—

सदात्मरूपं सकलादिभूतममायिनं सोहमचिन्त्यबोधम् ।
अनादिमध्यान्तविहीनमेकं तमेकदन्तं शरणं व्रजामः ।।३।।
अनन्तचिद्रूपमयं गणेशं ह्यभेदभेदादिविहीनमाद्यम् ।
हृदि प्रकाशस्य धरं स्वधीस्थं तमेकदन्तं शरणं व्रजामः ।।४।।
विश्वादिभूतं हृदि योगिनां वै प्रत्यक्षरूपेण विभान्तमेकम् ।
सदा निरालम्बसमाधिगम्यं तमेकदन्तं शरणं व्रजामः ।।५।।
स्वबिम्बभावेन विलासयुक्तं बिम्बस्वरूपा रचिता खमाया ।
तस्यां स्ववीर्यं प्रददाति यो वै तमेकदन्तं शरणं व्रजामः ।।६।।
यदीयवीर्येण समर्थभूता माया तया संरचितं च विश्वम् ।
नादात्मकं ह्यात्मतया प्रतीतं तमेकदन्तं शरणं व्रजामः ।।७।।
तदीयसत्ताधरमेकदन्तं गणेशमेकं त्रयबोधितारम् ।
सेवन्त आपुस्तमजं त्रिसंस्थास्तमेकदन्तं शरणं व्रजामः ।।८।।
ततस्त्वया प्रेरित एव नादस्तेनेदमेवं रचितं जगद्वै ।
आनन्दरूपं समभावसंस्थं तमेकदन्तं शरणं व्रजामः ।।९।।
तदेव विश्वं कृपया तवैव सम्भूतमाद्यं तमसा विभातम् ।
अनेकरूपं ह्यजमेकभूतं तमेकदन्तं शरणं व्रजामः ।।१०।।
ततस्त्वया प्रेरितमेव तेन सृष्टं सुसूक्ष्मं जगदेकसंस्थम् ।
सत्त्वात्मकं श्वेतमनन्तमाद्यं तमेकदन्तं शरणं व्रजामः ।।११।।
तदेव स्वप्नं तपसा गणेश संसिद्धिरूपं विविधं बभूव ।
सदेकरूपं कृपया तवापि तमेकदन्तं शरणं व्रजामः ।।१२।।

सम्प्रेरितं तच्च त्वया हृदिस्थं तथा सुसृष्टं जगदंशरूपम् ।
तेनैव जाग्रन्मयमप्रमेयं तमेकदन्तं शरणं व्रजामः ।।१३।।
जाग्रत्स्वरूपं रजसा विभातं विलोकितं तत्कृपया यदैव ।
तदा विभिन्नं भवत्येकरूपं तमेकदन्तं शरणं व्रजामः ।।१४।।
एवं च सृष्ट्वा प्रकृतिस्वभावात्तदन्तरे त्वं च विभासि नित्यम् ।
बुद्धि प्रदाता गणनाथ एकस्तमेकदन्तं शरणं व्रजामः ।।१५।।
त्वदाज्ञया भाति ग्रहाश्च सर्वे नक्षत्ररूपाणि विभान्ति खे वै ।
आधारहीनानि त्वया धृतानि तमेकदन्तं शरणं व्रजामः ।।१६।।
त्वदाज्ञया सृष्टिकरो विधाता त्वदाज्ञया पालक एव विष्णुः ।
त्वदाज्ञया संहरको हरोऽपि तमेकदन्तं शरणं व्रजामः ।।१७।।
यदाज्ञया भूर्जलमध्यसंस्था यदाज्ञयाऽपः प्रवहन्ति नद्यः ।
सीमां सदा रक्षति वै समुद्रस्तमेकदन्तं शरणं व्रजामः ।।१८।।
यदाज्ञया देवगणो दिविस्थो ददाति वै कर्मफलानि नित्यम् ।
यदाज्ञया शैलगणोऽचलो वै तमेकदन्तं शरणं व्रजामः ।।१९।।
यदाज्ञया शेष इलाधरो वै यदाज्ञया मोहप्रदश्च कामः ।
यदाज्ञया कालधरोऽर्यमा च तमेकदन्तं शरणं व्रजामः ।।२०।।
यदाज्ञया वाति विभाति वायुर्यदाज्ञयाऽग्निर्जठरादिसंस्थः ।
यदाज्ञया वै सचराचरं च तमेकदन्तं शरणं व्रजामः ।।२१।।
सर्वान्तरे संस्थितमेकगूढं यदाज्ञया सर्वमिदं विभाति ।
अनन्तरूपं हृदि बोधकं वै तमेकदन्तं शरणं व्रजामः ।।२२।।
यं योगिनो योगबलेन साध्यं कुर्वन्ति तं कः स्तवनेन स्तौति ।
अतः प्रणामेन सुसिद्धिदोऽस्तु तमेकदन्तं शरणं व्रजामः ।।२३।।

गृत्समद उवाच—

एवं स्तुत्वा च प्रह्लाद देवाः समुनयश्च वै ।
तूष्णीम्भावं प्रपद्येव ननृतुर्हर्षसंयुताः ।।२४।।

।।इति एकदन्तस्तोत्रं सम्पूर्णम्।।

## *महागणपतिस्तोत्रम्*

योगं योगविदां विधूतविविधव्यासङ्गशुद्धाशय
प्रादुर्भूतसुधारसप्रसृमरध्यानास्पदाध्यासिनाम् ।
आनन्दप्लवमानबोधमधुरामोदच्छटामेदुरं
तं भूमानमुपास्महे परिणतं दन्तावलास्यात्मना ।।१।।

तारश्रीपरशक्तिकामवसुधारूपानुगं यं विदु-
स्तस्मै स्तात्प्रणतिर्गणाधिपतये यो रागिणाभ्यर्थ्यते ।
आमन्त्र्य प्रथमं वरेति वरदेत्यार्तेन सर्वं जनं
स्वामिन्मे वशमानयेति सततं स्वाहादिभिः पूजितः ।।२।।

कल्लोलाञ्चलचुम्बिताम्बुदतताविक्षुद्रवाम्भोनिधौ
द्वीपे रत्नमये सुरद्रुमवनामोदैकमेदस्विनि ।
मूले कल्पतरोर्महामणिमये पीठेऽक्षराम्भोरुहे
षट्कोणाकलितत्रिकोणरचनासत्कर्णिकेऽमुं भजे ।।३।।

चक्रप्रासरसालकार्मुकगदासद्बीजपूरद्विज
व्रीह्यग्रोत्पलपाशपङ्कजकरं शुण्डाग्रजाग्रद्घटम् ।
आश्लिष्टं प्रियया सरोजकरया रत्नस्फुरद्भूषया
माणिक्यप्रतिमं महागणपतिं विश्वेशमाशास्महे ।।४।।

दानाम्भः परिमेदुरप्रसृमरव्यालम्बिरोलम्बभृ-
त्सिन्दूरारुणगण्डमण्डलयुगव्याजात्प्रशस्तिद्वयम् ।
त्रैलोक्येष्टविधानवर्णसुभगं यः पद्मरागोपमं
धत्ते स श्रियमातनोतु सततं देवो गणानां पतिः ।।५।।

भ्राम्यन्मन्दरघूर्णनापरवशक्षीराब्धिवीचिच्छटा
सच्छायाश्चलचामरव्यतिकरश्रीगर्वसर्वंकषाः ।
दिक्कान्ताघनसारचन्दनरसासाराः श्रयन्तां मनः
स्वच्छन्दप्रसरप्रलिप्तवियतो हेरम्बदन्तत्विषः ।।६।।

मुक्ताजालकरम्बितप्रविकसन्माणिक्यपुञ्जच्छटा
कान्ताः कम्बुकदम्बचुम्बितवनाभोगप्रवालोपमाः ।
ज्योत्स्नापूरतरङ्गमन्थरतरत्सन्ध्यावयस्याश्चिरं
हेरम्बस्य जयन्ति दन्तकिरणाकीर्णाः शरीरत्विषः ।।७।।
शुण्डाग्राकलितेन हेमकलशेनावर्जितेन क्षर-
न्नानारत्नचयेन साधकजनान्सम्भावयन्कोटिशः ।
दानामोदविनोदलुब्धमधुपप्रोत्सारणाविर्भव-
कर्णान्दोलनखेलनो विजयते देवो गणग्रामणीः ।।८।।
हेरम्बं प्रणमामि यस्य पुरतः शाण्डिल्यमूले श्रिया
बिभ्रत्याम्बुरुहेसमं मधुरिपुस्ते शङ्खचक्रे वहन् ।
न्यग्रोधस्य तले सहाद्रिसुतया शम्भुस्तया दक्षिणे
बिभ्राणः परशुं त्रिशूलमितया देव्या धरण्या सह ।।९।।
पश्चात्पिप्पलमाश्रितो रतिपतिर्देवस्य रत्योत्पले
बिभ्रत्या सममैक्षवं धनुरिषून्पौष्पान्वहन्पञ्च च ।
वामे चक्रगदाधरः स भगवान्क्रोडः प्रियागोस्तले
हस्ताद्यच्छुकशालिमञ्जरिकया देव्या धरण्या सह ।।१०।।
षट्कोणाश्रिषु षट्सु षट्गजमुखाः पाशाङ्कुशाभीवरा-
न्बिभ्राणाः प्रमदासखाः पृथुमहाशोणाश्मपुञ्जत्विषः ।
आमोदः पुरतः प्रमोदसुमुखौ तं चाभितो दुर्मुखः
पश्चात्पार्श्वगतोऽस्य विघ्न इति यो यो विघ्नकर्तेति च ।।११।।
आमोदादिगणेश्वरप्रियतमास्तत्रैव नित्यं स्थिताः
कान्ताश्लेषरसज्ञमन्थरदृशः सिद्धिः समृद्धिस्ततः ।
कान्तिर्या मदनावतीत्यपि तथा कल्पेषु या गीयते
सान्या यापि मदद्रवा तदपरा द्राविण्यमूः पूजिताः ।।१२।।
आश्लिष्टौ वसुधेत्यथो वसुमती ताभ्यां सितालोहितौ
वर्षन्तौ वसुपार्श्वयोर्विलसतस्तौ शङ्खपद्मौ निधी ।
अङ्गान्यन्वथ मातरश्च परितः शक्रादयोऽब्जाश्रया-
स्तद्बाह्ये कुलिशादयः परिपतत्कालानलज्योतिषः ।।१३।।

इत्थं विष्णुशिवादितत्त्वतनवे श्रीवक्रतुण्डाय हुं-
काराक्षिप्तसमस्तदैत्यपृतनाव्राताय दीप्तत्विषे ।
आनन्दैकरसावबोधलहरीविध्वस्तसर्वोर्मये
सर्वत्र प्रथमानमुग्धमहसे तस्मै परस्मै नमः ।।१४।।
सेवाहेवाकिदेवासुरनरनिकरस्फारकोटीरकोटी-
कोटिव्याटीकमानद्युमणिसममणिश्रेणिभावेणिकानाम्।
राजन्नीराजनश्रीसुखचरणनखद्योतविद्योतमानः
श्रेयः स्थेयः स देयान्मम विमलदृशो बन्धुरं सिन्धुरास्यः।।१५।।
एतेन प्रकटरहस्यमन्त्रमाला गर्भेण स्फुटतरसंविदा स्तवेन ।
यः स्तौति प्रचुरतरं महागणेशं तस्येयं भवति वशंवदा त्रिलोकी ।।

।।इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्य श्रीराघवचैतन्यविरचितं महागणपतिस्तोत्रं समाप्तम्।।

## *श्रीगणेशपञ्चरत्नम्*

मुदा करात्तमोदकं सदा विमुक्तिसाधकं कलाधरावतंसकं विलासिलोकरञ्जकम् ।
अनायकैकनायकं विनाशितेभदैत्यकं नताशुभाशुनाशकं नमामि तं विनायकम् ।।१।।
नतेतरातिभीकरं नवोदितार्कभास्वरं नमत्सुरारिनिर्जरं नताधिकापदुद्धरम्।
सुरेश्वरं निधीश्वरं गजेश्वरं गणेश्वरं महेश्वरं तमाश्रये परात्परं निरन्तरम्।।२।।
समस्तलोकशङ्करं निरस्तदैत्यकुञ्जरं दरेतरोदरं वरं वरेभवक्त्रमक्षरम् ।
कृपाकरं क्षमाकरं मुदाकरं यशस्करं मनस्करं नमस्कृतां नमस्करोमि भास्वरम् ।।३।।
अकिंचनार्तिमार्जनं चिरन्तनोक्तिभाजनं पुरारिपूर्वनन्दनं सुरारिगर्वचर्वणम् ।
प्रपञ्चनाशभीषणं धनञ्जयादिभूषणं कपोलदानवारणं भजे पुराणवारणम् ।।४।।
नितान्तकान्तदन्तकान्तिमन्तकान्तकात्मजं अचिन्त्यरूपमन्तहीनमन्तरायकृन्तनम्।।
हृदन्तरे निरन्तरं वसन्तमेव योगिनां तमेकदन्तमेव तं विचिन्तयामि सन्ततम्।।५।।
महागणेशपञ्चरत्नमादरेण योऽन्वहं प्रजल्पति प्रभातके हृदि स्मरन्गणेश्वरम्।
अरोगतामदोषतां सुसाहितीं सुपुत्रतां समाहितायुरष्टभूतिमभ्युपैति सोऽचिरात् ।।६।।

।।इति श्रीपरमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीशङ्करभगवतः कृतौ गणेशपञ्चरत्नं समाप्तम्।।

## श्रीगणेशभुजङ्गम्

रणत्क्षुद्रघण्टानिनादाभिरामं चलत्ताण्डवोद्दण्डवत्पद्मतालम् ।
लसत्तुन्दिलाङ्गोपरिव्यालहारं गणाधीशमीशानसूनुं तमीडे ।।१।।
ध्वनिध्वंसवीणालयोल्लासिवक्त्रं स्फुरच्छुण्डदण्डोल्लसद्बीजपूरम् ।
गलद्दर्पसौगन्ध्यलोलिमालं गणाधीशमीशानसूनुं तमीडे ।।२।।
प्रकाशज्जपारक्तरत्नप्रसूनप्रवालप्रभातारुणज्योतिरेकम् ।
प्रलम्बोदरं वक्रतुण्डैकदन्तं गणाधीशमीशानसूनुं तमीडे ।।३।।
विचित्रस्फुरद्रत्नमालाकिरीटं किरीटोल्लसच्चन्द्ररेखाविभूषम् ।
विभूषैकभूषं भवध्वंसहेतुं गणाधीशमीशानसूनुं तमीडे ।।४।।
उदञ्चद्भुजावल्लरीदृश्यमूलोच्चलद्भ्रूलता विभ्रमभ्राजदक्षम् ।
मरुत्सुन्दरीचामरैः सेव्यमानं गणाधीशमीशानसूनुं तमीडे ।।५।।
स्फुरन्निष्ठुरालोलपिङ्गाक्षितारं कृपाकोमलोदार लीलावतारम् ।
कलाबिन्दुगं गीयते योगिवर्यैर्गणाधीशमीशानसूनुं तमीडे ।।६।।
यमेकाक्षरं निर्मलं निर्विकल्पं गुणातीतमानन्दमाकारशून्यम् ।
परं परमोङ्कारमाम्नायगर्भं वदन्ति प्रगल्भं पुराणं तमीडे ।।७।।
चिदानन्दसान्द्राय शान्ताय तुभ्यं नमो विश्वकर्त्रे च हर्त्रे च तुभ्यम् ।
नमोऽनन्तलीलाय कैवल्यभासे नमो विश्वबीज प्रसीदेशसूनो ।।८।।
इमं संस्तवं प्रातरुत्थाय भक्त्या पठेद्यस्तु मर्त्यो लभेत्सर्वकामान् ।
गणेशप्रसादेन सिद्ध्यन्ति वाचो गणेशे विभौ दुर्लभं किं प्रसन्ने ।।९।।

।।इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीशङ्करभगवतः कृतौ गणेशभुजङ्गस्तोत्र सम्पूर्णम्।।

### पारमार्थिक एवं लौकिक मनोरथों की पूर्ति करानेवाले कुछ सिद्ध स्तोत्र

नीचे कुछ सिद्ध स्तोत्र दिये जा रहे हैं, जिनका श्रद्धा-भक्तिके साथ अनुष्ठान करनेपर 'पारमार्थिक' और 'भौतिक' लाभ हो सकते हैं। आशा है, श्रद्धालु पाठक इनसे यथोचित लाभ उठायेंगे। ऐसे अनुष्ठानोंके सम्बन्धमें हमारे एक सज्जनने एक स्थानपर लिखा है—

"यह सत्य है कि भगवान् अपनी मङ्गलमयी सर्वज्ञता और इच्छासे हमारे लिये जो कुछ भी फल-विधान करते हैं, चाहे वह हमारी सीमित और अदूरदृष्टिके कारण हमें अशुभ या दुःखप्रद

ही जान पड़े, वास्तवमें वह परम शुभ और परम मङ्गलकारी ही होता है। इसलिये भगवान् पर और उनकी मङ्गलमयतापर विश्वास करनेवाले भक्त यही चाहते हैं कि उनकी 'मङ्गलमयी' इच्छा ही सदा सर्वत्र अपना काम करती रहे; हमारी कोई भी इच्छा उस मङ्गलमयी इच्छामें कभी बाधक हो ही नहीं। तथापि जो लोग भोग-कामना और भोग-वासनाको छोड़ नहीं सकते और कामना एवं आसक्तिसे अभिभूत होकर अन्याय और असत् मार्गका अवलम्बन करके भोग-सुखकी आशा रखते हैं, उनके लिये तो भगवदाराधन और देवाराधन अवश्य ही सेवन करनेयोग्य है। इसमें लाभ-ही-लाभ है। यदि श्रद्धा और विधि पूरी हो तो—'नवीन प्रारब्ध' का निर्माण होकर मनोरथकी पूर्ति हो जाती है। कदाचित् प्रतिबन्धकरूप प्रारब्ध अत्यन्त प्रबल होनेके कारण मनोरथ-पूर्ति न भी हो तो पुण्यकर्मका अनुष्ठान तो बनता ही है।''

इन स्तोत्रोंके अनुष्ठानके सम्बन्धमें यह निवेदन है कि अनुष्ठानकर्त्ता भगवान् श्रीगणेशकी प्रतिमा या चित्रपटके सम्मुख पवित्र स्थानमें शुद्ध आसनपर बैठे और यथोपलब्ध उपचारोंसे श्रीगणेशका पूजन करके उनका मङ्गलमय स्मरण करते हुए श्रद्धा-भक्तिके साथ अपनी कामना के अनुकूल स्तोत्रका कम-से-कम ग्यारह पाठ प्रतिदिन करे; अधिक जितना भी हो उत्तम है। जबतक कामना पूर्ण न हो पाठ बराबर चलता रहे।

गणेशस्तोत्रमाला में अनेक स्तुतियाँ आयी हैं और वे सभी फलप्रदायिनी हैं। श्रीगणेशके कुछ मन्त्रोंका भी प्रसङ्गानुरूप उल्लेख हुआ है। श्रीगणेश-सम्बन्धी विभिन्न मन्त्र तथा उनकी अनुष्ठान-विधि, 'श्रीगणेश-सहस्रनाम-स्तोत्र', अन्य सिद्ध-अनुष्ठान, फलप्रद-स्तोत्र आदि यहाँ दिये जा रहे हैं। —सम्पादक

## १. मङ्गल-विधानके लिये

**गणपतिर्विघ्नराजो लम्बतुण्डो गजाननः । द्वैमातुरश्च हेरम्ब एकदन्तो गणाधिपः ।।**
**विनायकश्चारुकर्णः पशुपालो भवात्मजः । द्वादशैतानि नामानि प्रातरुत्थाय यः पठेत् ।।**
**विश्वं तस्य भवेद्वश्यं न च विघ्नं भवेत् क्वचित्** । (पद्मपु॰ सू॰ ६१ । ३१-३३)

'गणपति, विघ्नराज, लम्बतुण्ड, गजानन, द्वैमातुर, हेरम्ब, एकदन्त, गणाधिप, विनायक, चारुकर्ण, पशुपाल और भवात्मज—ये बारह गणेशजीके नाम हैं। जो प्रातःकाल उठकर इनका पाठ करता है, सम्पूर्ण विश्व उनके वशमें हो जाता है तथा उसे कभी विघ्नका सामना नहीं करना पड़ता।'

## २. मोक्ष-प्राप्तिके लिये

### पञ्चश्लोकिगणेशपुराणम्

श्रीविघ्नेशपुराणसारमुदितं व्यासाय धात्रा पुरा
तत्खण्डं प्रथमं महागणपतेश्चोपासनाख्यं यथा।
संहर्तुं त्रिपुरं शिवेन गणपस्यादौ कृतं पूजनं
कर्तुं सृष्टिमिमां स्तुतः स विधिना व्यासेन बुद्ध्यामये ।।
संकष्ट्याश्च विनायकस्य च मनोः स्थानस्य तीर्थस्य वै
दूर्वाणां महिमेति भक्तिचरितं तत्पार्थिवस्यार्चनम्।
तेभ्यो यैर्यदभीप्सितं गणपतिस्तत्तत्प्रतुष्टो ददौ
ताः सर्वा न समर्थ एव कथितुं ब्रह्मा कुतो मानवः ।।
क्रीडाकाण्डमथो वदे कृतयुगे श्वेतच्छविः काश्यपः
सिंहाङ्कः स विनायको दशभुजो भूत्वाथ काशीं ययौ।
हत्वा तत्र नरान्तकं तदनुजं देवान्तकं दानवं
त्रेतायां शिवनन्दनो रसभुजो जातो मयूरध्वजः ।।
हत्वा तं कमलासुरं च सगणं सिन्धुं महादैत्यपं
पश्चात् सिद्धिमती सुते कमलजस्तस्मै च ज्ञानं ददौ ।
द्वापारे तु गजाननो युगभुजो गौरीसुतः सिन्दुरं
सम्मर्द्य स्वकरेण तं निजमुखे चाखुध्वजो लिप्तवान् ।।
गीताया उपदेश एव हि कृतो राज्ञे वरेण्याय वै
तुष्टायाथ च धूम्रकेतुरभिधो विप्रः सधर्मर्धिकः ।
अश्वाङ्को द्विभुजो सितो गणपतिर्म्लेच्छान्तकः स्वर्णदः
क्रीडाकाण्डमिदं गणस्य हरिणा प्रोक्तं विधात्रे पुरा ।।
एतच्छ्लोकसुपञ्चकं प्रतिदिनं भक्त्या पठेद्यः पुमान्
निर्वाणं परमं व्रजेत् स सकलान् भुक्त्वा सुभोगानपि।

।।इति श्रीपञ्चश्लोकिगणेशपुराणम्।।

## ३. सर्वविध रक्षा के लिये

### गणेशन्यासः

श्रीगणेशाय नमः।। आचम्य प्राणायामं कृत्वा। दक्षिणहस्ते वक्रतुण्डाय नमः। वामहस्ते शूर्पकर्णाय नमः। ओष्ठे विघ्नेशाय नमः। सम्पुटे गजाननाय नमः। दक्षिणपादे लम्बोदराय नमः। वामपादे एकदन्ताय नमः। शिरसि एकदन्ताय नमः। चिबुके ब्रह्मणस्पतये नमः। दक्षिणनासिकायां विनायकाय नमः। वामनासिकायां ज्येष्ठराजाय नमः। दक्षिणनेत्रे विकटाय नमः। वामनेत्रे कपिलाय नमः। दक्षिणकर्णे धरणीधराय नमः। वामकर्णे आशापूरकाय नमः। नाभौ महोदराय नमः। हृदये धूम्रकेतवे नमः। ललाटे मयूरेशाय नमः। दक्षिणबाहौ स्वानन्दवासकारकाय नमः। वामवाहौ सच्चित्सुखधाम्ने नमः।

।।इति मुद्गलपुराणे गणेशन्यासः समाप्तः।।

## ४. समस्त कामनाओं की सिद्धिके लिये

### गणेशाष्टकम्

सर्वे ऊचुः

यतोऽनन्तशक्तेरनन्ताश्च जीवा यतो निर्गुणादप्रमेया गुणास्ते ।
यतो भाति सर्वे त्रिधा भेदभिन्नं सदा तं गणेशं नमामो भजामः ।
यतश्चाविरासीज्जगत्सर्वमेतत्तथाब्जासनो विश्वगो विश्वगोप्ता ।
तथेन्द्रादयो देवसङ्घा मनुष्याः सदा तं गणेशं नमामो भजामः ।।
यतो वह्निभानूद्भवो भूर्जलं च यतः सागराश्चन्द्रमा व्योम वायुः ।
यतः स्थावरा जङ्गमा वृक्षसङ्घाः सदा तं गणेशं नमामो भजामः ।।
यतो दानवाः किन्नरा यक्षसङ्घा यतश्चारणा वारणाः श्वापदाश्च ।
यतः पक्षिकीटा यतो वीरुधश्च सदा तं गणेशं नमामो भजामः ।।
यतो बुद्धिरज्ञाननाशो मुमुक्षोर्यतः सम्पदो भक्तसन्तोषिकाः स्युः ।
यतो विघ्ननाशो यतः कार्यसिद्धिः सदा तं गणेशं नमामो भजामः ।।
यतः पुत्रसम्पत् यतो वाञ्छितार्थो यतोऽभक्तविघ्नास्तथानेकरूपाः ।
यतः शोकमोहौ यतः काम एव सदा तं गणेशं नमामो भजामः ।।

यतोऽनन्तशक्तिः स शेषो बभूव धराधारणेऽनेकरूपे च शक्तः ।
यतोऽनेकधा स्वर्गलोका हि नाना सदा तं गणेशं नमामो भजामः ।।
यतो वेदवाचो विकुण्ठा मनोभिः सदा नेति नेतीति यत्ता गृणन्ति ।
परब्रह्मरूपं चिदानन्दभूतं सदा तं गणेशं नमामो भजामः ।।

श्रीगणेश उवाच

पुनरूचे गणाधीशः स्तोत्रमेतत्पठेन्नरः । त्रिसंध्यं त्रिदिनं तस्य सर्वं कार्यं भविष्यति ।।
यो जपेदष्टदिवसं श्लोकाष्टकमिदं शुभम्। अष्टवारं चतुर्थ्यां तु सोऽष्टसिद्धीरवाप्नुयात् ।।
यः पठेन्मासमात्रं तु दशवारं दिने दिने । स मोचयेद्बन्धगतं राजवध्यं न संशयः ।।
विद्याकामो लभेद्विद्यां पुत्रार्थी पुत्रमाप्नुयात् । वाञ्छितांल्लभते सर्वानेकविंशतिवारतः ।।
यो जपेत् परया भक्त्या गजाननपरो नरः । एवमुक्त्वा ततो देवश्चान्तर्धानं गतः प्रभुः ।।

।।इति श्रीगणेशपुराणे श्रीगणेशाष्टकं सम्पूर्णम्।।

## ५. *विघ्ननाश के लिये*

श्रीराधिकोवाच

परं धाम परं ब्रह्म परेशं परमीश्वरम् । विघ्ननिघ्नकरं शान्तं पुष्टं कान्तमनन्तकम् ।
सुरासुरेन्द्रैः सिद्धेन्द्रैः स्तुतं स्तौमि परात्परम्। सुरपद्मदिनेशं च गणेशं मङ्गलायनम् ।।
इदं स्तोत्रं महापुण्यं विघ्नशोकहरं परम् । यः पठेत् प्रातरुत्थाय सर्वविघ्नात् प्रमुच्यते।।

(ब्रह्मवैवर्तपुराण, श्रीकृष्णजन्मखण्ड १२१।१०३-१०५)

## ६. *संकटनाश के लिये*

### संकटनाशनस्तोत्रम्

नारद उवाच

प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम् । भक्तावासं स्मरेन्नित्यमायुःकामार्थसिद्धये ।।
प्रथमं वक्रतुण्डं च एकदन्तं द्वितीयकम् । तृतीयं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम् ।।
लम्बोदरं पञ्चमं च षष्ठं विकटमेव च । सप्तमं विघ्नराजेन्द्रं धूम्रवर्णं तथाष्टमम् ।।
नवमं भालचन्द्रं च दशमं तु विनायकम् । एकादशं गणपतिं द्वादशं तु गजाननम्।।

द्वादशैतानि नामानि त्रिसंध्यं यः पठेन्नरः। न च विघ्नभयं तस्य सर्वसिद्धिकरं परम्।।
विद्यार्थी लभते विद्यां धनार्थी लभते धनम्। पुत्रार्थी लभते पुत्रान् मोक्षार्थी लभते गतिम्।।
जपेद्गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत्। संवत्सरेण सिद्धिं च लभते नात्र संशयः।।
अष्टभ्यो ब्राह्मणेभ्यश्च लिखित्वा यः समर्पयेत्। तस्य विद्या भवेत् सर्वा गणेशस्य प्रसादतः।।

इति श्रीनारदपुराणे सङ्कष्टनाशनं नाम गणेशस्तोत्रं सम्पूर्णम्।

## *७. चिन्ता एवं रोग-निवारण के लिये*

### मयूरेशस्तोत्रम्

ब्रह्मोवाच

पुराणपुरुषं देवं नानाक्रीडाकरं मुदा। मायाविनं दुर्विभाव्यं मयूरेशं नमाम्यहम्।।
परात्परं चिदानन्दं निर्विकारं हृदि स्थितम्। गुणातीतं गुणमयं मयूरेशं नमाम्यहम्।।
सृजन्तं पालयन्तं च संहरन्तं निजेच्छया। सर्वविघ्नहरं देवं मयूरेशं नमाम्यहम्।।
नानादैत्यनिहन्तारं नानारूपाणि बिभ्रतम्। नानायुधधरं भक्त्या मयूरेशं नमाम्यहम्।।
इन्द्रादिदेवतावृन्दैरभिष्टुतमहर्निशम्। सदसद्व्यक्तमव्यक्तं मयूरेशं नमाम्यहम्।।
सर्वशक्तिमयं देवं सर्वरूपधरं विभुम्। सर्वविद्याप्रवक्तारं मयूरेशं नमाम्यहम्।।
पार्वतीनन्दनं शम्भोरानन्दपरिवर्धनम्। भक्तानन्दकरं नित्यं मयूरेशं नमाम्यहम्।।
मुनिध्येयं मुनिनुतं मुनिकामप्रपूरकम्। समष्टिव्यष्टिरूपं त्वां मयूरेशं नमाम्यहम्।।
सर्वाज्ञाननिहन्तारं सर्वज्ञानकरं शुचिम्। सत्यज्ञानमयं सत्यं मयूरेशं नमाम्यहम्।।
अनेककोटिब्रह्माण्डनायकं जगदीश्वरम्। अनन्तविभवं विष्णुं मयूरेशं नमाम्यहम्।।

मयूरेश उवाच

इदं ब्रह्मकरं स्तोत्रं सर्वपापप्रनाशनम्। सर्वकामप्रदं नृणां सर्वोपद्रवनाशनम्।।
कारागृहगतानां च मोचनं दिनसप्तकात्। आधिव्याधिहरं चैव भुक्तिमुक्तिप्रदं शुभम्।।

## *८. पुत्रकी प्राप्ति के लिये*

### संतानगणपतिस्तोत्रम्

नमोऽस्तु गणनाथाय सिद्धिबुद्धियुताय च। सर्वप्रदाय देवाय पुत्रवृद्धिप्रदाय च।।
गुरूदराय गुरवे गोप्त्रे गुह्यासिताय ते। गोप्याय गोपिताशेषभुवनाय चिदात्मने।।

विश्वमूलाय भव्याय विश्वसृष्टिकराय ते । नमो नमस्ते सत्याय सत्यपूर्णाय शुण्डिने ।।
एकदन्ताय शुद्धाय सुमुखाय नमो नमः । प्रपन्नजनपालाय प्रणतार्तिविनाशिने ।।
शरणं भव देवेश सन्ततिं सुदृढां कुरु। भविष्यन्ति च ये पुत्रा मत्कुले गणनायक ।।
ते सर्वे तव पूजार्थं निरताः स्युर्वरो मतः। पुत्रप्रदमिदं स्तोत्रं सर्वसिद्धिप्रदायकम् ।।

।।इति संतानगणपतिस्तोत्रं सम्पूर्णम्।।

## ९. श्री एवं पुत्रकी प्राप्ति के लिये

### श्रीगणाधिपस्तोत्रम्

सरागिलोकदुर्लभं विरागिलोकपूजितं सुरासुरैर्नमस्कृतं जरादिमृत्युनाशकम् ।
गिरा गुरुं श्रिया हरिं जयन्ति यत्पदार्चका नमामि तं गणाधिपं कृपापयःपयोनिधिम् ।।
गिरीन्द्रजामुखाम्बुजप्रमोददानभास्करं करीन्द्रवक्त्रमानताघसंघवारणोद्यतम् ।
सरीसृपेशबद्धकुक्षिमाश्रयामि संततं शरीरकान्तिनिर्जिताब्जबन्धुबालसंततिम् ।।
शुकादिमौनिवन्दितं गकारवाच्यमक्षरं प्रकाममिष्टदायिनं सकामनम्रपङ्क्तये ।
चकासनं चतुर्भुजैर्विकासिपद्मपूजितं प्रकाशितात्मतत्त्वकं नमाम्यहं गणाधिपम् ।।
नराधिपत्वदायकं स्वरादिलोकदायकं जरादिरोगवारकं निराकृतासुरव्रजम् ।
कराम्बुजैर्धरन् सृणीन् विकारशून्यमानसैर्हृदा सदा विभावितं मुदा नमामि विघ्नपम् ।।
श्रमापनोदनक्षमं समाहितान्तरात्मना समाधिभिः सदार्चितं क्षमानिधिं गणाधिपम् ।
रमाधवादिपूजितं यमान्तकात्मसम्भवं शमादिषड्गुणप्रदं नमामि तं विभूतये ।।
गणाधिपस्य पञ्चकं नृणामभीष्टदायकं प्रणामपूर्वकं जनाः पठन्ति ये मुदायुताः ।
भवन्ति ते विदाम्पुरः प्रगीतवैभवाः जनाश्चिरायुषोऽधिकश्रियः सुसूनयो न संशयः ।।

।।इति भच्छङ्कराचार्यकृतं गणाधिपस्तोत्रं सम्पूर्णम्।।

## १०. लक्ष्मीप्राप्ति के लिये

ॐ नमो विघ्नराजाय सर्वसौख्यप्रदायिने । दुष्टारिष्टविनाशाय पराय परमात्मने ।।
लम्बोदरं महावीर्यं नागयज्ञोपशोभितम् । अर्धचन्द्रधरं देवं विघ्नव्यूहविनाशनम् ।।
ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः हेरम्बाय नमो नमः। सर्वसिद्धिप्रदोऽसि त्वं सिद्धिबुद्धिप्रदो भव।।

चिन्तितार्थप्रदस्त्वं हि सततं मोदकप्रियः । सिन्दूरारुणवस्त्रैश्च पूजितो वरदायकः ।।
इदं गणपतिस्तोत्रं यः पठेद् भक्तिमान् नरः । तस्य देहं च गेहं च स्वयं लक्ष्मीर्न मुञ्चति ।।

## ११. परिवार में पारस्परिक प्रेम-प्राप्ति के लिये

### गणपतिस्तोत्रम्

सुवर्णवर्णसुन्दरं सितैकदन्तबन्धुरं गृहीतपाशकाङ्कुशं वरप्रदाभयप्रदम् ।
चतुर्भुजं त्रिलोचनं भुजङ्गमोपवीतिनं प्रफुल्लवारिजासनं भजामि सिन्धुराननम् ।।
किरीटहारकुण्डलं प्रदीप्तबाहुभूषणं प्रचण्डरत्नकङ्कणं प्रशोभिताङ्घ्रियष्टिकम् ।
प्रभातसूर्यसुन्दराम्बरद्वयप्रधारिणं सरत्नहेमनूपुरप्रशोभिताङ्घ्रिपङ्कजम् ।।
सुवर्णदण्डमण्डितप्रचण्डचारुचामरं गृहप्रदेन्दुसुन्दरं युगक्षणप्रमोदितम् ।।
कवीन्द्रचित्तरञ्जकं महाविपत्तिभञ्जकं षडक्षरस्वरूपिणं भजे गजेन्द्ररूपिणम् ।।
विरिञ्चिविष्णुवन्दितं विरूपलोचनस्तुतं गिरीशदर्शनेच्छया समर्पितं पराम्बया ।
निरन्तरं सुरासुरैः सपुत्रवामलोचनैः महामखेष्टकर्मसु स्मृतं भजामि तुन्दिलम् ।।
मदौघलुब्धचञ्चलालिमञ्जुगुञ्जितारवं प्रबुद्धचित्तरञ्जकं प्रमोदकर्णचालकम् ।
अनन्यभक्तिमानवं प्रचण्डमुक्तिदायकं नमामि नित्यमादरेण वक्रतुण्डनायकम् ।।
दारिद्र्यविद्रावणमाशु कामदं स्तोत्रं पठेदेतदजस्रमादरात् ।
पुत्री कलत्रस्वजनेषु मैत्री पुमान् भवेदेकवरप्रसादात् ।।

।।इति श्रीमच्छङ्कराचार्यविरचितं गणपतिस्तोत्रं सम्पूर्णम्।।

## १२. पुरुषार्थचतुष्टयकी प्राप्ति के लिये

### गजाननस्तोत्रम्

देवर्षय ऊचुः

विदेहरूपं भवबन्धहारं सदा स्वनिष्ठं स्वसुखप्रदं तम् ।
अमेयसांख्येन च लक्ष्यमीशं गजाननं भक्तियुतं भजामः ।।
मुनीन्द्रवन्द्यं विधिबोधहीनं सुबुद्धिदं बुद्धिधरं प्रशान्तम् ।
विकारहीनं सकलाङ्ककं वै गजाननं भक्तियुतं भजामः ।।

अमेयरूपं हृदि संस्थितं तं ब्रह्माहमेकं भ्रमनाशकारम् ।
अनादिमध्यान्तमपाररूपं गजाननं भक्तियुतं भजामः ।।
जगत्प्रमाणं जगदीशमेवमगम्यमाद्यं जगदादिहीनम् ।
अनात्मनां मोहप्रदं पुराणं गजाननं भक्तियुतं भजामः ।।
न पृथ्विरूपं न जलप्रकाशं न तेजसंस्थं न समीरसंस्थम् ।
न खे गतं पञ्चविभूतिहीनं गजाननं भक्तियुतं भजामः ।।
न विश्वगं तैजसगं न प्राज्ञं समष्टिव्यष्टिस्थमनन्तगं तम् ।
गुणैर्विहीनं परमार्थभूतं गजाननं भक्तियुतं भजामः ।।
गुणेशगं नैव च बिन्दुसंस्थं न देहिनं बोधमयं न ढुण्ढिम् ।
सुयोगहीनं प्रवदन्ति तत्स्थं गजाननं भक्तियुतं भजामः ।।
अनागतं ग्रैवगतं गणेशं कथं तदाकारमयं वदामः ।
तथापि सर्वं प्रतिदेहसंस्थं गजाननं भक्तियुतं भजामः ।।
यदि त्वया नाथ धृतं न किंचित्तदा कथं सर्वमिदं भजामि ।
अतो महात्मानमचिन्त्यमेवं गजाननं भक्तियुतं भजामः ।।
सुसिद्धिदं भक्तजनस्य देवं सकामिकानामिह सौख्यदं तम् ।
अकामिकानां भवबन्धहारं गजाननं भक्तियुतं भजामः ।।
सुरेन्द्रसेव्यं ह्यसुरैः सुसेव्यं समानभावेन विराजयन्तम् ।
अनन्तबाहुं मुषकध्वजं तं गजाननं भक्तियुतं भजामः ।।
सदा सुखानन्दमयं जले च समुद्रजे इक्षुरसे निवासम् ।
द्वन्द्वस्य यानेन च नाशरूपं गजाननं भक्तियुतं भजामः ।।
चतुःपदार्था विविधप्रकाशास्त एव हस्ताः सचतुर्भुजं तम् ।
अनाथनाथं च महोदरं वै गजाननं भक्तियुतं भजामः ।।
महाखुमारूढमकालकालं विदेहयोगेन च लभ्यमानम् ।
अमायिनं मायिकमोहदं तं गजाननं भक्तियुतं भजामः ।।
रविस्वरूपं रविभासहीनं हरिस्वरूपं हरिबोधहीनम् ।
शिवस्वरूपं शिवभासनाशं गजाननं भक्तियुतं भजामः ।।

महेश्वरीस्थं च सुशक्तिहीनं प्रभुं परेशं परवन्द्यमेवम् ।
अचालकं चालकबीजरूपं गजाननं भक्तियुतं भजामः ।।
शिवादिदेवैश्च खगैश्च वन्द्यं नरैर्लतावृक्षपशुप्रमुख्यैः ।
चराचरैर्लोकविहीनमेकं गजाननं भक्तियुतं भजामः ।।
मनोवचोहीनतया सुसंस्थं निवृत्तिमात्रं ह्यजमव्ययं तम् ।
तथापि देवं पुरसंस्थितं तं गजाननं भक्तियुतं भजामः ।।
वयं सुधन्या गणपस्तवेन तथैव मर्त्यार्चनतस्तथैव ।
गणेशरूपाय कृतास्त्वया तं गजाननं भक्तियुतं भजामः ।।
गजास्यबीजं प्रवदन्ति वेदास्तदेव चिह्नेन च योगिनस्त्वाम् ।
गच्छन्ति तेनैव गजानन त्वां गजाननं भक्तियुतं भजामः ।।
पुराणवेदाः शिवविष्णुकाद्याः शुक्रादयो ये गणपस्तवे वै ।
विकुण्ठिताः किं च वयं स्तुवीमो गजाननं भक्तियुतं भजामः।।

मुद्गल उवाच

एवं स्तुत्वा गणेशानं नेमुः सर्वे पुनः पुनः। तानुत्थाप्य वचो रम्यं गजानन उवाच ह ।।

गजानन उवाच

वरं ब्रूत महाभागा देवाः सर्षिगणाः परम् । स्तोत्रेण प्रीतिसंयुक्तो दास्यामि वाञ्छितं परम्।।
गजाननवचः श्रुत्वा हर्षयुक्ताः सुरर्षयः । जगुस्तं भक्तिभावेन साश्रुनेत्राः प्रजापते ।।

देवर्षय ऊचुः

गजानन यदि स्वामिन् प्रसन्नो वरदोऽसि मे। तदा भक्तिं दृढां देहि लोभहीनां त्वदीयकाम्।।
लोभासुरस्य देवेश कृता शान्तिः सुखप्रदा। तया जगदिदं सर्वं वरयुक्तं कृतं त्वया ।।
अधुना देवदेवेश कर्मयुक्ता द्विजातयः। भविष्यन्ति धरायां वै वयं स्वस्थानगास्तथा ।।
स्वस्वधर्मरताः सर्वे कृतास्त्वया गजानन । अतः परं वरं ढुण्ढे याचमानाः किमप्यहो ।।
यदा ते स्मरणं नाथ करिष्यामो वयं प्रभो । तदा सङ्कटहीनान् वै कुरु त्वं नो गजानन ।।
एवमुक्त्वा प्रणेमुस्तं गजाननमनामयम् । तानुवाचाथ प्रीतात्मा भक्ताधीनः स्वभावतः ।।

।। इति श्रीकाञ्ची उपनिषद्ब्रह्मेन्द्रमठाधीश श्री-इष्टसिद्धेन्द्रसरस्वतीयतिशिष्य-श्रीकृष्णानान्दन्देन्द्र-सरस्वतीयति शिष्य श्रीपूर्णानानन्दन्देन्द्रसरस्वतीयतिशिष्य-श्रीज्ञानानदन्देन्द्रसरस्वतीयतिविरचिते श्रीविद्यामहार्णवे श्रीगणपति-प्रकरणं समाप्तम्।।

।।श्रीगुरुभ्यो नमः।।

"परिरक्षणीय परिवेदक परमार्थरत्न"

# श्रीविद्यामहार्णवः

(सचित्र-सम्पूर्ण-सपर्यापद्धति ग्रन्थः)

श्रीभूमाम्बा श्रीगुहानन्दनाथ लहरी

कल्पतरुः

श्रीइच्छाशक्तिः

## प्रथमो भागः

## ३. आह्निक-प्रकरणम्

१. नित्याह्निक खण्डः

२. रश्मिमाला खण्डः

३. अजपा गायत्री खण्डः

४. नित्यानुष्ठान खण्डः

५. लघुपूजा खण्डः

६. आम्नाय खण्डः (पुच्चरणः)

७. देवीमान गणना खण्डः

दाक्षिणात्य

परमहंस-परिव्राजक

श्री श्री श्री ज्ञानानन्देन्द्रसरस्वतीयति-विरचितः

वाराणसी, चेन्नै, हैदराबाद एवं बेंगलूर

# तृतीय मुद्राकल्प तरङ्गः



**२५. संमुखीकरणी—** सन्निधापन्येव तिर:प्रयोजिता।।



**२६. वन्दनी—** उदंगुलिनोः करतलयोः जिनी वन्दनी।



**२७. तत्त्वमुद्रा—** वामानामांगुष्ठ योगे तत्त्व मुद्रा।



**२८. चिन्मुद्रा—** दक्षांगुष्ठ-तजनीयोगे चिन्मुद्रा।



**२९. संहार (निर्याण) मुद्रा—** अधो मुखे वामहस्ते उर्ध्वास्यं दक्षहस्तकम् क्षिप्त्वांगुली रंगुलीभिः संग्रथ्य परिवर्जयेत्। एषा संहारमुद्रा स्यात् विसर्जनविधौ स्मृता।।



**३०. मुखम्—** संहवाभिः चतसृभिः अंगुलीभिः मुखस्पर्शे मुखम्।



**३१. करसंपुटम्—** संपुटीकृतयोः करयोः मिथो अभिमुखप्रश्लेषे करसंपुटम्।



**३२. अंजलिः—** किंचिदाकुंचित-अगुल्यग्रयोः स्वाभिमुखं करयोरन्योन्यसंबन्धे अंजलिः।



**३३. हृदयम्—** तर्जनी-मध्यमा-अनामाग्रैः हृदयस्पर्शे हृदयम्।



**३४. शिरः—** मध्यमा-अनामाग्रयोः ब्रह्म-रन्ध्र संबन्धे शिरः।



**३५. शिखा—** अंगुष्ठाग्र चूलीयोगे शिखा।



**३६. कवचम्—** व्यत्यय हस्तयोः अधरोत्तरं वामहस्त दक्षकरयोः- सर्वांगुलीभिः अंस-संबन्धे कवचम्।

श्रीगणेशाय नमः　　　　　　　　श्रीसरस्वत्यै नमः　　　　　　　　श्रीगुरुभ्यो नमः

# श्रीविद्यामहार्णवः

## श्रीभूमाम्बा श्रीगुहानन्दनाथ लहरी

## कल्पतरुः

## प्रथमो भागः

## आह्निक-प्रकरणम्

### १. नित्याह्निक खण्डः

#### गुरुध्यानम्

ब्राह्मे मुहूर्त उत्थाय निषण्णः शयने निजे । अपलापाय पापानामादावेव समाचरेत् ।।१।।
स्वब्रह्मरन्ध्रगाम्भोजकर्णिकापीठवासिनम् । शिवरूपं श्वेतवस्त्रामाल्यभूषानुलेपनम् ।।२।।
दयार्द्रदृष्टिं स्मेरास्यं वराभयकराम्बुजम् । वामाङ्कगतया पीतवपुषारुणवेषया ।।३।।
पद्मवत्या वामकरे शक्त्या दक्षभुजावृतम् । अमुकानन्दनाथं तं सानन्दं चिन्तयेत्सुधीः ।।४।।

#### श्रीगुरुपादुकामन्त्रः

ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः, हंसः शिवः सोहं, हस्ख्फ्रें हसक्षमलवरयूं ह्सौः सहक्षमलवरयीं स्हौः हंसः शिवः सोहं स्वरूपनिरूपणहेतवे श्रीगुरवे नमः, अमुकानन्दनाथश्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः सोहं हंसः शिवः ह्स्ख्फ्रें हसक्षमलवरयूं ह्सौः सहक्षमलवरयीं स्हौः सोहं हंसः शिवः स्वच्छप्रकाशविमर्शहेतवे श्रीपरमगुरवे नमः, अमुकानन्दनाथश्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः, हंसः शिवः सोहं हंसः, ह्स्ख्फ्रें हसक्षमलवरयूं ह्सौः सहक्षमलवरयीं स्हौः हंसः शिवः सोहं हंसः स्वात्मारामपञ्जरविलीनतेजसे श्रीपरमेष्ठिगुरवे नमः, अमुकानन्दनाथश्रीपादुकां पूजयामि नमः।।

तदनन्तरं सुमुख-सुवृत्त-चतुरश्र-मुद्गर-योन्याख्याभिः पञ्चमुद्राभिः श्रीगुरुं प्रणम्य।

**नमस्ते नाथ भगवन् शिवाय गुरुरूपिणे । विद्यावतारसंसिद्ध्यै स्वीकृतानेकविग्रह ।।**
**नवाय नवरूपाय परमार्थैकरूपिणे । सर्वाज्ञानतमोभेदभावने चिद्घनाय ते ।।**
**स्वतन्त्राय दयाक्लृप्तविग्रहाय शिवात्मने । परतन्त्राय भक्तानां भव्यानां भव्यरूपिणे ।।**
**विवेकिनां विवेकाय विमर्शाय विमर्शिनाम् । प्रकाशिनां प्रकाशाय ज्ञानिनां ज्ञानरूपिणे।।**
**पुरस्तात्पार्श्वयोः पृष्ठे नमस्कुर्यामुपर्यधः । सदा मच्चित्तरूपेण विधेहि भवदासनम्।।**
**इत्येवं पञ्चभिः श्लोकैः स्तुवीत यतमानसः। प्रातः प्रबोधसमये जपात्सुदिवसं भवेत् ।।**

अथ तच्चरणकमलयुगलविगलदमृतरसविसरपरिप्लुताखिलाङ्गमात्मानं भावयन् **शिवादिश्रीगुरुभ्यो नमः** इति मूर्ध्नि बद्धाञ्जलिः ततः त्रिः प्राणानायच्छेत्।।

## *प्राणायामः*

तत्प्रकारश्च— एकवारमावृत्तया मूलविद्यया पिङ्गळापथेन पूरकं, त्रिरावृत्तया तया मूलाधारानाहताज्ञासंज्ञेषु कमलेषु क्रमेण शोणपीतश्वेतकूटत्रयविभावनापूर्वकं सुषुम्नायां कुम्भकं, द्विरावृत्तया च तया इडानाडीवर्त्मना रेचकमिति।

## *चिद्विमर्शः*

तेन च नियमितमनःस्पन्दः आमूलाधारादाब्रह्मबिलमुद्गतां तटिल्लतासदृशाकृतिं तरुणारुणपिञ्जरतेजसा ज्वलन्तीं सर्वकारणभूतां परां संविदं विचिन्त्य तद्रश्मिनिकरभस्मितसकलकश्मलजालो मूलं मनसा दशवारमावर्त्य देवीं स्तुयात्। तद्यथा—

## *श्रीराजराजेश्वरी-प्रातःस्मरणम्*

[ नाम से स्पष्ट है कि ये श्लेक प्रातःकाल उठकर पाठ करने के हैं। इनमें तीनों लोकों की जननी और राज्ञी लोगों की आश्रयभूता, भण्ड महिषासुर को मारने वाली भगवती का स्मरण किया गया है। इसके प्रतिदिन पाठ करने वाले की रक्षा भगवती स्वतः करती हैं।]

**प्रातः स्मरामि सुसुधाम्बुधिमध्यभागे कल्पाटवीपरिवृते मणिनिर्मितेऽस्मिन् ।**
**चिन्तामणीयसुमहासदने निविष्टां राजेश्वरीं त्रिजगतां जननीं च राज्ञीम् ।।१।।**
**प्रातर्नमामि सकलागमनित्यवेद्यं संक्रन्दनादिसुरवृन्दनिषेव्यमाणम् ।**
**लाक्षारुणं कमलशङ्खसुरेखिकं च राजेश्वरीपदयुगं जगतां शरण्यम् ।।२।।**

प्रातर्वदामि सकलेष्टसुदानदक्षं दक्षञ्च भक्तभयरोगसमूलनाशे ।
भाग्यप्रदञ्च भवरोगनिवारकञ्च राजेश्वरीमहितनामसहस्रमेव ।।३।।
प्रातः पठामि दुरितौघविनाशहेतुं वन्दारुवाञ्छितफलप्रदमाशु नित्यम् ।
मोक्षप्रदं मुनिनुतं सुमहत्त्वपूर्णं माहात्म्यमेव महितं वरषोडशेश्याः ।।४।।
प्रातश्शृणोमि शठमाहिषभण्डमुख्यसर्वासुरक्षपणदीक्षितमाहवेषु ।
वीरायितं च वरदानविचक्षणं च विस्मापनीयचरितं जगदम्बिकायाः ।।५।।
यः श्लोकपञ्चकमिदं पठति प्रभाते सिंहासनस्थितमनोहरचक्रराज्ञाः ।
राजेश्वरी च रजनीकरचारुचूडा रक्षां करोति सततं तदिदं हि सत्यम् ।।६।।

।।इति श्रीमहाराज्ञी-श्रीराजराजेश्वरी-प्रातःस्मरणम्।।

## *श्रीललितापञ्चरत्नम्*

[ श्रीमदादि जगद्गुरु शंकराचार्य भगवत्पाद रचित इस ललिता-पञ्चरत्न स्तोत्र का प्रतिदिन प्रातः शय्यात्याग कर मुख-प्रक्षालन के अनन्तर पाठ करना चाहिए। इस स्तोत्र में भगवती के मुख, भुजाओं, चरणयुग्मों का वर्णन, उनकी स्तुति तथा उनके नामों का पाँच श्लोकों में वर्णन किया गया है। इसके पाठ से भगवती सद्यः प्रसन्न होकर भक्तों को विद्या, श्री निश्छल-मित्र, अनन्त कीर्ति और सौभाग्य, यह पाँच वस्तुएँ देती हैं। कहीं-कहीं यह 'देवीपञ्चरत्नम्' नाम से भी प्राप्त होता है।]

प्रातः प्रभृति सायान्तं सायादि प्रातरन्ततः यत्करोमि जगद्योने तदस्तु तव पूजनम्।
मञ्जुसिञ्जितमंजीरं वाममर्धं महेशितुः आश्रयामि जगन्मूलं यन्मूलं सचराचरम्।।१।।
प्रातः स्मरामि ललितावदनारविन्दं बिम्बाधरं पृथुलमौक्तिकशोभिनासम्।
आकर्णदीर्घनयनं मणिकुण्डलाढ्यं मन्दस्मितं मृगमदोज्ज्वल-भालदेशम् ।।२।।
प्रातर्भजामि ललिताभुजकल्पवल्लीं रक्ताङ्गुलीयलसदङ्गुलिपल्लवाढ्याम् ।
माणिक्यहेमवलयाङ्गदशोभमानां पुण्ड्रेक्षुचापकुसुमेषु सृणीर्दधानाम् ।।३।।
प्रातर्नमामि ललिताचरणारविन्दं भक्तेष्टदाननिरतं भवसिन्धुपोतम् ।
पद्मासनादिसुरनायकपूजनीयं पद्माङ्कुशध्वजसुदर्शनलाञ्छनाढ्यम् ।।४।।
प्रातः स्तुवे परशिवां ललितां भवानीं त्रय्यन्तवेद्यविभवां करुणानवद्याम् ।
विश्वस्य सृष्टिविलयस्थितिहेतुभूतां विद्येश्वरीं निगमवाङ्मनसातिदूराम् ।।५।।

**प्रातर्वदामि ललिते तव पुण्यनाम कामेश्वरीति कमलेति महेश्वरीति ।**
**श्रीशाम्भवीति जगतां जननी परेति वाग्देवतेति वचसा त्रिपुरेश्वरीति ।।६।।**
**यः श्लोकपञ्चकमिदं ललिताम्बिकायाः सौभाग्यदं सुललितं पठति प्रभाते ।**
**तस्मै ददाति ललिता झटिति प्रसन्ना विद्यां श्रियं विमलसौख्यमनन्तकीर्तिम् ।।७।।**

ललितापंचरत्नम् समाप्तः।

## *दिव्यमङ्गळाध्यानम्*

**अस्य श्रीदिव्यमङ्गळाध्यानमहामन्त्रस्य आनन्ददक्षिणामूर्तिऋषये नमः। पङ्क्तिच्छन्दसे नमः। श्रीराजेश्वरीपरदेवतायै नमः।** बालामनुभिः बीजशक्तिकीलकं कर्तव्यम्।

**श्रीराजराजेश्वरीप्रसादसिद्ध्यर्थे जपे विनियोगः** मूलेन करषडङ्गन्यासौ। ध्यानं—

**आरक्ताभां त्रिनेत्रां मणिमकुटमयीमक्षमालां दधानां**
**हस्ताम्भोजे सपाशाङ्कुशमदनधनुस्सायकैर्विस्फुरन्तीम्।**
**आपीनोत्तुङ्गवक्षोरुहपरिविलसत्तारहारोज्ज्वलाङ्गीं**
**ध्यायेत्कामाङ्कसंस्थामरुणिमवसनामीश्वरीमीश्वराणाम्।।**

लमित्यादिपञ्चोपचारपूजा।

श्रीदेव्युवाच—

**देवदेव महादेव सच्चिदानन्दविग्रह। पञ्चकृत्यपरेशान परमानन्ददायक।।१।।**
**श्रीराजराजराजेशी या श्रीत्रिपुरसुन्दरी। तस्या ध्यानं ममाचक्ष्व यदि ते करुणा मयि।।२।।**

ईश्वर उवाच—

**लक्षवारसहस्राणि वारितापि पुनः पुनः । स्त्रीस्वभावान्महादेवि पुनस्त्वं परिपृच्छसि ।।३।।**
**इतः पूर्वं मया नोक्तं गोप्याद्गोप्यतरं शिवे। येनाहमपि युद्धेषु देवासुरजयी सदा।।४।।**
**निगमागमकोटीनां सारात्सारतरं शिवे । श्रीराजराजराजेश्या ध्यानं सर्वोत्तमोत्तमम् ।।५।।**
**तव स्नेहात्प्रवक्ष्यामि भोगमोक्षप्रदं नृणाम्। सर्वरोगारिमृत्युघ्नं सर्वसौभाग्यवर्धनम् ।।६।।**
**भूतप्रेतपिशाचादिकृत्यारिशमनं शुभम् । यद्ध्यानाज्जननीगर्भे न पुनर्जायते नरः ।।७।।**
**अनेककोटिब्रह्माण्डकोटीनां बहिरूर्ध्वतः। सहस्रकोटिविस्तीर्णसुधासिन्धोस्तु मध्यमे ।।८।।**
**रत्नद्वीपे जगद्दीपे शतकोटिप्रविस्तरे । पञ्चविंशतितत्त्वात्मपञ्चविंशतिवप्रकैः ।।९।।**

नवरत्नमयैः स्तम्भैर्हाटिकाकलितैः शुभैः । अनेककोटिविततैर्मणिकुट्टिममण्डितैः ।।१०।।
जातीचम्पकपुन्नागकेतकीबकुलादिभिः । बिल्वैश्च सहकारैश्च कल्पकैश्च कदम्बकैः ।।११।।
मन्दारपारिजातैश्च संतानाद्यैः सुशोभितैः । सर्वर्तुकुसुमैः सर्ववाञ्छितार्थफलप्रदैः ।।१२।।
वसन्तमन्मथानीकरक्षितैः पक्षिसंकुलैः । नदीनदसहस्रैश्च सुधाधिकरसोत्तमैः ।।१३।।
स्वर्णदीशतसाहस्रैः कूलोद्यत्कल्पपादपैः । स्वर्णसारसहंसालिलसत्सौवर्णपङ्कजैः ।।१४।।
अन्यैश्च विविधैः पक्षिलक्षैः पूर्णैः सुलक्षणैः। शतयोजनमुन्नम्रैर्गोपुराट्टालमण्डपैः ।।१५।।
रविकोटिसमप्रख्यैः काञ्चनैर्मणितोरणैः । अनेकादित्यसंकाशैर्विराजितदिगन्तरैः ।।१६।।
त्रिलक्षयोजनायाममहापद्मवनावृते । सहस्रयोजनायामचिन्तामणिगृहान्तरे ।।१७।।
नवशक्तिलसद्योगपीठे तत्वमयाम्बुजे । शतयोजनविस्तीर्णे श्रीचक्रान्तस्त्रिकोणके ।।१८।।
चतुष्पीठान्तरे बिन्दौ चन्द्रसूर्याग्निकोटिभे । पञ्चब्रह्मात्मके मञ्चे सर्वतत्वमये शुभे ।।१९।।
महामायायवनिकामहिते सुबृहत्तरे । सषडासनषट्कोणे चतुरासनगर्भिते ।।२०।।
तुर्यपीठान्तषट्त्रिंशत्तत्वोद्यद्धंसतूलिके । सर्वविद्यामये सर्वतेजोमयशुभास्तरे ।।२१।।
कोटिकन्दर्पलावण्यशिववामाङ्कवासिनीम् । एककालोदितानेकचन्द्रकोट्यर्कपाटलाम् ।।२२।।
कालाग्निकोटिसदृशां कान्त्या यावकलोहिताम्। जपाकुसुमसंकाशामजपामजपात्मिकाम् ।।२३।।
प्रभापाटलितानेककोटिब्रह्माण्डमण्डलाम् । कुङ्कुमोदकसंकाशां दाडिमीकुसुमारुणाम् ।।२४।।
बालार्ककोटिभां त्र्यक्षां बालेन्दुमकुटोज्ज्वलाम्। पाशाङ्कुशेक्षुकोदण्डपञ्चबाणलसत्कराम् ।।२५।।
अचञ्चलतटित्कोटिप्रभापिङ्गलवाससा । समावृतां सुवृत्तोरुजघनस्तनमण्डलाम् ।।२६।।
कोटीरकोटिघटितसुधाकरसुधाप्लुताम् । अनर्घरत्नखचितमुकुटाञ्चितमस्तकाम् ।।२७।।
पारिजातप्रसूनश्रीवाहिधम्मिल्लबन्धनाम् । मुक्तालिमालाविलसदलकाढ्यमुखाम्बुजाम् ।।२८।।
कलङ्ककार्श्यनिर्मुक्तशरच्चन्द्रनिभाननाम् । ललाटकान्तिविभवैर्विजितार्धसुधाकराम्।।२९।।
सान्द्रसौरभ्यसंपन्नकस्तूरीतिलकाञ्चिताम् । फालभूतिलकीभूतलोचनां कामलोचनाम् ।।३०।।
कटाक्षसरणीनिर्यत्करुणापूर्णवीक्षणाम् ।भ्रूलताजितकन्दर्पकरकार्मुकविभ्रमाम् ।।३१।।
विकसत्तिलपुष्पश्रीविजयोद्यतनासिकाम् । सूर्येन्दुमण्डलाकारमणिताटङ्कमण्डिताम् ।।३२।।
शुक्राकारतिरस्कारिनासाभरणभासुराम् । रत्नाङ्कितलसत्स्वर्णकर्णपूरोपशोभिताम् ।।३३।।
जपाविद्रुमलावण्यललिताधरपल्लवाम् । दाडिमीबीजसंदोहसंदेहरदनावलीम् ।।३४।।
शीतांशुशतसंकाशकान्तिसंतानहासिनीम् । अनौपम्यगुणोपेतचिबुकोद्देशशोभिताम् ।।३५।।
वीणारवगुणादायिनिजवाणीगुणोदयाम् । कर्पूरवीटिकामोदसमाकर्षद्दिगन्तराम् ।।३६।।

मणिदर्पणदर्पघ्नकपोलफलकप्रभाम् । प्रसन्नवदनाम्भोजसमन्दहसितेक्षणाम् ।।३७।।
मणिमङ्गळसूत्रेण विलसत्कम्बुकन्धराम् । श्रितकल्पलताभूतभुजवल्लीचतुष्टयाम् ।।३८।।
तप्तकाञ्चनसंनद्धवैडूर्याङ्गदभूषणाम् । पद्मरागशिलादर्शकङ्कणाढ्यकराम्बुजाम् ।।३९।।
रत्नाङ्गुलीयनिवहैर्लसदङ्गुलिपल्लवाम् । ताराहारझरीभास्वत्स्तनहाटकभूधराम् ।।४०।।
पाटीरपङ्ककर्पूरकुङ्कुमालंकृतस्तनीम् । बिन्दुत्रयाद्यवक्त्राब्जस्तनद्वितयगुह्यकाम् ।।४१।।
कुचभारनमन्मध्यत्रिवलीललितोदराम् । मुक्तामाणिक्यवैडूर्यसंबद्धोदरबन्धनाम् ।।४२।।
जाह्नवीसरिदावर्तशोभिनाभिविराजिताम् । अनर्घरत्नखचितरशनाजघनस्थलाम् ।।४३।।
सुवृत्तजङ्घोरूकाण्डां गूढगुल्फां गुडालकाम् । शिञ्जानमणिमञ्जीरमञ्जुपादाब्जमञ्जुलाम् ।।४४।।
रत्नग्रैवेयवलयां मकुटाङ्गदकङ्कणाम् । कम्बुकण्ठीं सुनासाढ्यां बिम्बोष्ठीमुडुपाननाम् ।।४५।।
नवयौवनमध्यस्थां साङ्गाभरणसंयुताम् । सर्वशृङ्गारवेषाढ्यां सर्वाभरणभूषिताम् ।।४६।।
चन्दनागरुकर्पूरमृगनाभिसुगन्धिनीम् । तनुदीर्घाङ्गुलीभास्वन्नखचन्द्रविराजिताम् ।।४७।।
कारणेशशिरोरत्ननिघृष्टचरणाम्बुजाम् । पञ्चप्रेतासनासीनां पञ्चप्रणवरूपिणीम् ।।४८।।
सृष्टिस्थित्युपसंहारतिरोधानुग्रहोद्यताम् । अष्टत्रिंशत्कलारूपामष्टवाग्देवतावृताम् ।।४९।।
षोढान्यासमहाभूषां षोडशार्णस्वरूपणीम् । इच्छाज्ञानक्रियानन्दचित्पञ्चकविलासिनीम् ।।५०।।
प्रपञ्चादिजगन्मूर्तिमन्त्रदैवतमातृकाम् । सप्तकोटिमहामन्त्ररूपिणीं चित्स्वरूपिणीम् ।।५१।।
षडध्वसौधशृङ्गाटविहाररसपेशलाम् । षड्विधैक्यानुसंधानपरचिद्व्योम्नि संस्थिताम् ।।५२।।
षडम्बुरुहचक्रान्तस्फुरत्सौदामिनीप्रभाम् । षड्वक्त्रगजवक्त्राभ्यां पार्श्वयोरुपसेविताम् ।।५३।।
अणिमाद्यावृतामाद्यामणिमाद्यष्टसिद्धिदाम् । सकृत्प्रणाममात्रेण विरिञ्चादिपदप्रदाम् ।।५४।।
कल्याणगुणसंपन्नां नतकल्याणदायिनीम् । सर्वमङ्गळदां देवीं सर्वमङ्गळविग्रहाम् ।।५५।।
अनेकजन्मसंसिद्धसुकृताराध्यपादुकाम् । सर्वलोकैकजननीं सर्वलोकैकनायिकाम् ।।५६।।
सचामराभ्यां श्रीवाग्भ्यां पार्श्वयोरुपवीजिताम्। मन्त्रिणीदण्डिनीनीतिविधानाकर्णनोत्सुकाम् ।।५७।।
कलाचीवीटिकाच्छत्रभृङ्गारादर्शपादुकाम् । मणिवीणांशुकं शशिं तालवृन्तं कमण्डलुम् ।।५८।।
पानपात्रं स्वर्णवेत्रं पूर्णस्वर्णघटद्वयम् । जयकाहलिकां भेरीं शङ्खदुन्दुभिमर्दलान् ।।५९।।
मकरध्वजपङ्क्तिं च हंससिंहध्वजावलीम् । दिव्यानि धूपपात्राणि तथा सौवर्णदीपिकाम् ।।६०।।
बिभ्रतीभिश्च बालान्नपूर्णाताराभिरादरात्। गायत्र्या चैव सावित्र्या सिद्धलक्ष्म्यादिशक्तिभिः ।।६१।।
वाग्वादिन्या नकुल्या च तुरगारूढयावृताम्। कपालशूलधारिण्या शूलिन्या बगलाह्वया ।।६२।।

सम्पत्कर्या च साम्राज्यलक्ष्म्या च कुरुकुल्लया। पद्मावत्या रेणुकया भीमकाल्या च दुर्गया ।।६३।।
नीलकण्ठ्या महाकाल्या भद्रकाल्या च भद्रया। गङ्गाद्याभिः सरिद्भिश्च मातृभिश्च सुसेविताम्।।६४।।
महाषोढोदिताशेषदेवतागणसेविताम् । गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम् ।।६५।।
पञ्चाशत्पीठमध्यस्थां पञ्चाशद्वर्णरूपिणीम् । मातृकापीठमध्यस्थां मातृकाष्टकवर्गिणीम्।।६६।।
नवचक्रात्मिकां देवीं नवचक्राधिदेवताम् । नित्यानन्दमयीं नित्यां नित्याषोडशिकान्विताम् ।।६७।।
सर्वपीठमयीमाद्यां पीठत्रितयमध्यगाम् । ओड्याणपीठनिलयां गुरुमण्डलनायिकाम्।।६८।।
अनन्तयोगिनीवृन्दैरणिमाद्यैर्महोज्ज्वलैः । कोटिकोटिप्रभिन्नैश्च कोटिबालार्कसंनिभैः ।।६९।।
चतुस्समयविद्याभिः षड्विधैर्योगिनीगणैः । षड्दर्शनाधिदेवैश्च पञ्चाम्नायाधिदैवतैः ।।७०।।
चतुरायतनोद्भासिगणेशार्कहरीश्वरैः । नवावरणदेवीभिर्नवधा योगिनीगणैः ।।७१।।
सेवितामरुणानेककोटिकोट्यर्कपाटलाम् । ब्रह्माणीकोटिसहितब्रह्मकोटिभिरावृताम् ।।७२।।
अनेककोटिभिश्चैव बालार्कायुतसंनिभैः । नामपारायणपरैर्लक्ष्मीनारायणैः स्तुताम् ।।७३।।
ज्वलन्मन्युभिरत्युग्रैः शतरुद्रीयसंस्तुतैः । रुद्राणीकोटिसहितै रुद्रकोटिभिरर्चिताम् ।।७४।।
अनेकशरभाघोरबडवानलभैरवैः । दुर्गाभिः कालिकाभिश्च महाकाल्या च संवृताम्।।७५।।
गणपैर्वीरभद्रैश्च वटुकैः क्षेत्रपालकैः । सुकुमारैः कुमारैश्च तथा हरिहरात्मजैः ।।७६।।
अनेकदशदिक्पालैश्चन्द्रार्कवसुकोटिभिः। सनकाद्यैश्च योगीन्द्रैः सप्तर्षीणां च कोटिभिः।।७७।।
नारदादिसुरर्षीणां कोटिभिः परिसेविताम्। शङ्खपद्मनिधीनां च कोटिभिः परिसेविताम् ।।७८।।
अप्सरोयक्षगन्धर्वकिन्नराणां च कोटिभिः। कोटिभिर्गुह्यकानां च सविद्याधरकोटिभिः ।।७९।।
भैरवीभैरवाणां च कोटिकोटिभिरावृताम्। सुरासुराणां कोटीनां कोटिभिः परिसेविताम् ।।८०।।
सर्वमन्त्रमयीं देवीं सच्चिदानन्दविग्रहाम् । इच्छाज्ञानक्रियारूपामिच्छाकलितविग्रहाम्।।८१।।
परादिवैखरीरूपां महामायां परात्पराम् । महालक्ष्मीं महादेवीं महात्रिपुरसुन्दरीम्।।८२।।
जगदाह्लादनकरीं जगत्संकल्पविग्रहाम् । जगत्संजीवनोद्युक्तां जगद्रञ्जनकारिणीम्।।८३।।
महाकामकलारूपां चतुरासनसंस्थिताम् । राजाराजेश्वराङ्कस्थां राजराजेश्वरेश्वरीम् ।।८४।।
एवं ध्यात्वा पराशक्तिं हृदि श्रीचक्ररूपिणीम् । पूर्वोक्तन्यासशुद्धात्मा स्वात्माभेदेन भावयेत् ।।८५।।
अन्तर्यागक्रमेणैव शुद्धिद्रव्यसमन्वितः । रक्ताम्बरस्रगालेपरक्तभूषणभूषितः ।।८६।।
लाक्षारुणगृहे स्थित्वा पूजां कुर्यात्समाहितः। आवाहनादिभेदांश्च दश मुद्राः प्रदर्शयेत् ।।८७।।
यथाशक्ति जपेद्विद्वान् श्रीविद्यां सर्वसिद्धिदाम्। सौभाग्यदण्डिनीमुद्रां रिपुजिह्वाग्रहन्त्रिणीम् ।।८८।।

शाक्तं च तिलकं कुर्वन्मुखवेष्टनमाचरेत् । पुनः संपूर्णया चैव गलोर्ध्वं विन्यसेद्बुधः ।।८९।।
व्यापकान्ते योनिमुद्रां मुखे क्षिप्त्वाभिवादयेत्। ब्रह्मरन्ध्रे न्यसेत्पूर्वं मणिबन्धद्वये पुनः ।।९०।।
ललाटेऽनामिकां कृत्वा त्रैलोक्यस्याप्यहं प्रभुः। गुरूपदिष्टमार्गेण षोडशार्णं न्यसेत्ततः ।।९१।।
संहारं च ततः सृष्टिं स्थितिन्यासं समाचरेत्। ऋष्यादिकन्यासपूर्वं षडङ्गन्यासमाचरेत् ।।९२।।
चक्रपूजापरो मन्त्री श्रीचक्रार्चनपूर्वकम् । बिन्दुबिन्दुद्वयारूढहार्दबिन्दुस्वरूपकाम् ।।९३।।
महाकामकलारूपमात्मानं भावयेद्धिया । संपूर्णं चिन्तयेद्विद्वान् ब्रह्मरन्ध्रेऽरुणप्रभाम् ।।९४।।
स्रवत्सुधाषोडशार्णां सर्वसौभाग्यदां स्मरेत्। षोडशार्णं महामन्त्रं मन्त्रराजोत्तमोत्तमम् ।।९५।।
सकृच्छ्रवणमात्रेण कोटिजन्माघनाशनम् । महापातककोटीनां भञ्जनं स्मृतिमात्रतः ।।९६।।
उपपातकदौर्भाग्यशमनं भुक्तिमुक्तिदम् । विषरोगादिदारिद्र्यमृत्युसंहारकारकम् ।।९७।।
सप्तकोटिमहामन्त्रपारायणफलप्रदम् । शतरुद्रीयकोटीनां जपयज्ञफलप्रदम् ।।९८।।
चतुस्समुद्रपर्यन्तभूदानफलदं शिवे । सहस्रकोटिगोदानफलदं ध्यानमात्रतः।।९९।।
कोट्यश्वमेधफलदं जरामृत्युनिवारणम् । किं पुनर्बहुनोक्तेन शिवसायुज्यदायकम् ।।१००।।
घुटिकापादुकासिद्धिखेचरत्वादिदायकम् । ब्रह्मविष्णुमहेशाद्यैर्जप्तं यत्पदसिद्धये ।।१०१।।
तत्पदं देशिकाल्लब्धुं षोडशार्णं महामनुम्। सहस्रं प्रजपेद्विद्वान् त्रिशतं शतमेव वा ।।१०२।।
स जीवन्मुक्त एव स्यात्सर्वसौभाग्यसुन्दरः । चतुःषष्टिकलापूर्णहृदयः सदयोदयः ।।१०३।।
श्रीगुरोः पादुका मूर्ध्नि श्रीचक्रं हृदि देवता । श्रीविद्या यस्य जिह्वाग्रे स साक्षात्परमः शिवः।।१०४।।
सहस्रारसुधाक्लृप्तषडम्भोरुहमण्डलः । आचन्द्रतारकस्थायिनिजवंशयशोज्ज्वलः ।।१०५।।
श्रीचक्रदेवीश्रीनाथस्वात्मनामैक्यमामृशन् । त्रैलोक्यमरुणं ध्यात्वा श्रीविद्यां यो जपेत्सुधीः।।१०६।।
स योगी कृतकृत्यश्च चराचरविभुर्भवेत् । सृष्टिस्थितिलयादीनां कृत्याकृत्यविभञ्जकः ।।१०७।।
जङ्गमस्थावरोद्भूतविषविद्रावकोविदः । दिव्यमङ्गळकल्याणगुणरत्नैरलंकृतः ।।१०८।।
मृतसंजीवको नित्यो महाद्भुतचरित्रभूः । सिद्धचारणगन्धर्वयक्षरक्षोरगैः स्तुतः ।।१०९।।
विचरन्सकलाँल्लोकान्निग्रहानुग्रहक्षमः । महालक्ष्मीमयो भूत्वा लक्ष्मीवृन्दैश्च सेवितः ।।११०।।
भुञ्जानो बहुलान्भोगान् मूर्तिमानिव मन्मथः । सृष्टिस्थित्युपसंहारकर्ता शिव इवापरः ।।१११।।
राजराजेश्वरीरूपो राजराजाभिवन्दितः । कुलकोटिं समुद्धृत्य शिवयोरैक्यमाप्नुयात्।।११२।।

इदं ध्यानं मया प्रोक्तं श्रीविद्याप्रीतिदायकम्।।

इति दिव्यमङ्गळाध्यानम्।।

ततो वक्ष्यमाणरश्मिमालामन्त्रांश्चैकवारमावर्तयेत्।

## भावनोपनिषत्

स्वाविद्यापदतत्कार्यं श्रीचक्रोपरि भासुरम्। बिन्दुरूपशिवाकारं रामचन्द्रपदं भजे।।१।।

ॐ भद्रं कर्णेभिश्शृणुयाम देवाः, भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाँसस्तनूभिः, व्यशेम देवहितं यदायुः ।
स्वस्ति न इन्द्रो वृद्धश्रवाः, स्वस्ति नः पूषा विश्ववेदाः ,
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः, स्वस्ति नो बृहस्पतिर्दधातु ।
ओं शान्तिश्शान्तिश्शान्तिः।

हरिः ॐ। आत्मानमखण्डमण्डलाकारमावृत्य सकलब्रह्माण्डमण्डलं स्वप्रकाशं ध्यायेत्। श्रीगुरुः सर्वकारणभूता शक्तिः।।१।। तेन नवरन्ध्ररूपो देहः।।२।। नवचक्ररूपं श्रीचक्रम्।।३।। वाराही पितृरूपा कुरुकुल्ला बलिदेवता माता।।४।। पुरुषार्थाः सागराः।।५।। देहो नवरत्नद्वीपः।।६।। त्वगादिसप्तधातुरोमसंयुक्तः।।७।। संकल्पाः कल्पतरवस्तेजः कल्पको-द्यानम्।।८।। रसनया भाव्यमाना मधुराम्लतिक्तकटुकषायलवणरसाः षड्तवः।।९।। ज्ञानमर्घ्यं ज्ञेयं हविर्ज्ञाता होता *ज्ञातृज्ञानज्ञेयानामभेदभावनं श्रीचक्रपूजनम्* ।।१०।। नियतिः शृङ्गारादयो रसा अणिमादयः।।११।। कामक्रोधलोभमोहमदमात्सर्यपुण्यपापमया ब्राह्म्याद्यष्ट शक्तयः।।१२।। आधारनवकं मुद्रा-शक्तयः।।१३।। पृथिव्यप्तेजोवाय्वाकाशश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायू-पस्थानि मनोविकारः कामाकर्षिण्यादिषोडश शक्तयः।।१४।। वचनादानगमनविसर्गानन्दहानोपादानो-पेक्षाख्यबुद्ध्योऽनङ्गकुसुमाद्यष्टौ।।१५।। अलम्बुसा कुहूर्विश्वोदरा वारणा हस्तिजिह्वा यशोवती पयस्विनी गान्धारी पूषा शङ्खिनी सरस्वतीडा पिङ्गला सुषुम्ना चेति चतुर्दश नाड्यः सर्वसंक्षोभिण्यादिचतुर्दश शक्तयः।।१६।। प्राणापानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनञ्जया दश वायवः सर्वसिद्धि-प्रदादिबहिर्दशारदेवताः।।१७।। एतद्वायुसंसर्गकोपाधिभेदेन रेचकः पाचकः शोषको दाहकः प्लावक इति प्राणमुख्यत्वेन पञ्चधा जठराग्निर्भवति।।१८।। क्षारक उद्गारकः क्षोभको जृम्भको मोहक इति नागप्राधान्येन पञ्चविधास्ते मनुष्याणां देहगा भक्ष्यभोज्यचोष्यलेह्यपेयात्मकपञ्चविधमन्नं पाचयन्ति।।१९।। एता दश वह्निकलाः सर्वज्ञाद्या अन्तर्दशारदेवताः।।२०।। शीतोष्णसुखदुःखेच्छाः सत्त्वं रजस्तमो वशिन्यातिशक्तयोऽष्टौ।।२१।। शब्दादितन्मात्राः पञ्च पुष्पबाणाः।।२२।। मन इक्षुधनुः।।२३।। रागः पाशः।।२४।। द्वेषोऽङ्कुशः।।२५।। *अव्यक्तमहदहङ्काराः कामेश्वरी-वज्रेश्वरीभगमालिन्योऽन्तस्त्रिकोणगा देवताः* ।।२६।। निरुपाधिकसंविदेव कामेश्वरः।।२७।। सदानन्दपूर्णः स्वात्मैव परदेवता ललिता।।२८।। लौहित्यमेतस्य सर्वस्य विमर्शः।।२९।। अनन्यचित्तत्वेन च सिद्धिः।।३०।। भावनायाः क्रिया उपचारः।।३१।। अहं त्वमस्ति नास्ति कर्तव्यमकर्तव्यमुपासितव्यमिति विकल्पानामात्मनि विलापनं होमः।।३२।। भावनाविषयाणामभेदभावना तर्पणम्।।३३।। पञ्चदशतिथिरूपेण कालस्य परिणामावलोकनम्।।३४।। एवं

मुहूर्तत्रितयं मुहूर्तद्वितयं मुहूर्तमात्रं वा भावनापरो जीवन्मुक्तो भवति स एव शिवयोगीति गद्यते।।३५।। कादिमतेनान्तश्चक्रभावनाः प्रतिपादिताः।।३६।। य एवं वेद सोऽथर्वशिरोऽधीते।।३७।। इत्युपनिषत्।।

## *शान्तिपञ्चकम्*

शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं न इन्द्रोबृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम्।। ओं शान्तिः शान्तिः शान्तिः।

शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्मावादिषम्। ऋतमवादिषम्। सत्यमवादिषम्। तन्मामावीत्। तद्वक्तारमावीत्। आवीन्माम्। आवीद्वक्तारम्।। ओं शान्तिः शान्तिः शान्तिः।

सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै।। ओं शान्तिः शान्तिः शान्तिः।।

नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मा मामृषयो मन्त्रकृतो मन्त्रपतयः परादुर्माऽहमृषीन्मन्त्रकृतो मन्त्रपतीन्परादां वैश्वदेवीं वाचमुद्यासँ शिवामदस्ताञ्जुष्टां देवेभ्यः शर्म मे द्यौः शर्म पृथिवी शर्म विश्वमिदं जगत्। शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्म प्रजापती। भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहमिदमुपस्तरणमुपस्तृण उपस्तरणं मे प्रजायै पशूनां भूयादुपस्तरणमहं प्रजायै पशूनां भूयासं प्राणापानौ मृत्योर्मापातं प्राणापानौ मा मा हासिष्टं मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासँ शुश्रूषेण्यां मनुष्येभ्यस्तं मा दवा अवन्तु शोभायै पितरोऽनुमदन्तु। ओं शान्तिः शान्तिः शान्तिः।

तच्छंयोरावृणीमहे। गातुं यज्ञाय। गातुं यज्ञपतये। दैवी स्वस्तिरस्तु नः। स्वस्तिर्मानुषेभ्यः। ऊर्ध्वं जिगातु भेषजम्। शं नो अस्तु द्विपदे। शं चतुष्पदे। ॐ शान्तिः शान्तिः शान्तिः।

।।इति शान्तिपञ्चकम्।।

## २. रश्मिमाला खण्डः

### *रश्मिमालामन्त्राः*

**अस्य श्रीरश्मिमालामहामन्त्रस्य भगवान् भार्गव ऋषिः, गायत्र्यादीनि छन्दांसि, सर्वविद्यामयी महात्रिपुरसुन्दरी पराभट्टारिका देवता। सर्वश्रेयःप्रसिद्ध्यर्थे जपे विनियोगः।**

त्रितारीद्विरावृत्त्या करषडङ्गन्यासं कृत्वा, ध्यानम्—

**असंख्यातमहःपुञ्जपिञ्जरीकृतविग्रहाम्।**
**रश्मिमालामहं वन्दे महात्रिपुरसुन्दरीम्।।**

लमित्यादिपञ्चोपचारपूजा।

(अत्र वैदिकेषु स्वरपूर्वं पाठः)

**१. ॐ भूर्भुवः सुवः। तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्।।**

इति त्रिंशद्वर्णा गायत्री। (मूलाधारे)

**२. यत इन्द्र भयामहे ततो नो अभयं कृधि।**
**मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि।।**
**स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी।**
**वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयंकरः।।**

इत्यैन्द्री विद्या सप्तषष्ट्यर्णा संकटे भयनाशिनी। (हृदये)

**३. ॐ घृणिः सूर्य आदित्योम्।** इत्यष्टार्णा सौरी तेजोदा। (फाले)

**४. ॐ।** इति प्रणवः केवलो ब्रह्मविद्या मुक्तिप्रदा। (ब्रह्मरन्ध्रे)

**५. ॐ परोरजसे सावदोम्।**

इति नवार्णा तुरीयगायत्री स्वैक्यविमर्शिनी। (द्वादशान्ते) रश्मिपञ्चकमेतत् मूलाधारहृत्फाल-विधिबिलद्वादशान्तस्थानबीजतया भावनीयम्। द्वादशान्तस्थानं तु ललाटस्योत्तरभागः।

**६. ॐ सूर्याक्षितेजसे नमः। खेचराय नमः। असतो मा सद्गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय। उष्णो भगवान् शुचिरूपः। हंसो भगवान् शुचिरप्रतिरूपः।**
**विश्वरूपं घृणिनं जातवेदसं हिरणमयं ज्योतिरेकं तपन्तम्।**
**सहस्त्ररश्मिःशतधावर्तमानःप्राणःप्रजानामुदयत्येषसूर्यः।।**

**ॐ नमो भगवते सूर्यायाहोवाहिनि वाहिन्यहोवाहिनि वाहिनि स्वाहा।।**

**वयस्सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाथमानाः। अपध्वान्तमूर्णुहि पूर्धिचक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान्।। पुण्डरीकाक्षाय नमः। पुष्करेक्षणाय नमः। अमलेक्षणाय नमः। कमलेक्षणाय**

**नमः। विश्वरूपाय नमः। श्रीमहाविष्णवे नमः।** इति षोडशमन्त्रसमष्टिरूपिणी चक्षुष्मतीविद्या दूरदृष्टिसिद्धिप्रदा। (मूलाधारे)

७. **ॐ गन्धर्वराज विश्वावसो ममाभिलषितां कन्यां प्रयच्छ स्वाहा।** इत्युत्तमकन्याविवाहदायिनी। (हृदये)

८. **ॐ नमो रुद्राय पथिषदे स्वस्ति मा संपारय** इति मार्गसंकटहारिणी। (फाले)

९. **ॐ तारे तुत्तारे तुरे स्वाहा।** इति जलापच्छमनी। (ब्रह्मरन्ध्रे)

१०. **अच्युताय नमः। अनन्ताय नमः। गोविन्दाय नमः।**

इति महाव्याधिशमनी नामत्रयीविद्या। (द्वादशान्ते)

एतद्रश्मिपञ्चकं मूलाधारादिपरिकरतया ज्ञेयम्।

११. **ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा।**

इति महागणपतिविद्या प्रत्यूहशमनी। (मूलाधारे)

१२. **ॐ नमः शिवायै। ॐ नमः शिवाय।** इति द्वादशार्णा शिवतत्त्वविमर्शिनी। (हृदये)

१३. **ॐ जुं सः मां पालय पालय।** इति दशार्णा मृत्योरपि मृत्युरेषा विद्या। (फाले)

१४. **ॐ नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं मा च्योढ्वं ममामुष्य ओं।** इति श्रुतिधारिणी विद्या। (ब्रह्मरन्ध्रे)

१५. **अं आं....ळं क्षं (५१)।**

इति सबिन्दुरकारादिक्षकारान्तवर्णात्मिका मातृका सर्वज्ञताकरी। (द्वादशान्ते)

इमे पञ्च रश्मयो मूलादिरक्षात्मकतया द्रष्टव्याः।।

१६. **हसकलह्रीं हसकहलह्रीं सकलह्रीं।** इति लोपामुद्राविद्या स्वस्वरूपविमर्शिनी। (मूलाधारे)

१७. **क्लीं हैं हसौः हसौः हैं क्लीं।** इति षट्कूटा संपत्करी विद्या। (हृदये)

१८. **सं सृष्टिनित्ये स्वाहा। हं स्थितिपूर्णे नमः। रं महासंहारिणि कृशे चण्डकालि फट्। रं ह्स्ख्फ्रें महानाख्ये अनन्तभास्करि महाचण्डकालि फट्। रं महासंहारिणि कृशे चण्डकालि फट्। हं स्थितिपूर्णे नमः। सं सृष्टिनित्ये स्वाहा। ह्स्ख्फ्रें महाचण्डयोगेश्वरि।** इति विद्यापञ्चकरूपिणी कालसंकर्षिणी परमायुःप्रदा। (फाले)

१९. **ऐं ह्रीं श्रीं ह्स्ख्फ्रें ह्सौः अहमहं अहमहं हसौः ह्स्ख्फ्रें श्रीं ह्रीं ऐं।** इति शुद्धज्ञानदा शाम्भवी विद्या। (ब्रह्मरन्ध्रे)

२०. **सौः।** इयं पराविद्या। (द्वादशान्ते)

एते पञ्च रश्मयो मूलाद्यधिष्ठानतया कलनीयाः।

२१. **ऐं क्लीं सौः, सौः क्लीं ऐं, ऐं क्लीं सौः।** इति नवाक्षरी श्रीदेव्यङ्गभूता बाला।

२२. **ह्रीं श्रीं क्लीं ॐ नमो भगवति अन्नपूर्णे ममाभिलषितमन्नं देहि स्वाहा।**

इति श्रीदेव्या उपाङ्गभूता अन्नपूर्णा।

२३. **ॐ आं ह्रीं क्रों एहि परमेश्वरि स्वाहा।** इयं श्रीदेवीप्रत्यङ्गभूता अश्वारूढा।

२४. **ऐं ह्रीं श्रीं हस्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं हसौं स्हौः श्री** अमुका-**नन्दनाथगुरुश्रीपादुकां पूजयामि नमः।** इति श्रीगुरुपादुका।

२५. **क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं।** इति मूलविद्या।

बाला अन्नपूर्णा अश्वारूढा श्रीपादुका चेत्येताभिश्चतसृभिः युक्ता मूलविद्या-सम्राज्ञी मूलाधारे विलोचनीया।

२६. **ऐं नमः उच्छिष्टचाण्डालि मातङ्गि सर्ववशंकरि स्वाहा।** इति श्यामाङ्गभूता लघुश्यामा।

२७. **ऐं क्लीं सौः वद वद वाग्वादिनि स्वाहा।** इयं श्यामोपाङ्गभूता वाग्वादिनी।

२८. **ॐ ओष्ठापिधाना नकुली दन्तैः परिवृता पविः।**
**सर्वस्यै वाच ईशाना चारु मामिह वादयेत्।** इयं श्यामाप्रत्यङ्गभूता नकुलीविद्या।

२९. **ऐं क्लीं सौः हस्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं हसौं स्हौः श्री** अमुका-**नन्दनाथगुरुश्रीपादुकां पूजयामि नमः।** इति श्यामागुरुपादुका।

३०. **ऐं ह्रीं श्री ऐं क्लीं सौः ओं नमो भगवति श्रीमातङ्गीश्वरि सर्वजनमनोहारि सर्वमुखरञ्जिनि क्लीं ह्रीं श्रीं सर्वराजवशंकरि सर्वस्त्रीपुरुषवशंकरि सर्वदुष्टमृगवशंकरि सर्वसत्ववशंकरि सर्वलोकवशंकरि त्रैलोक्यं मे वशमानय स्वाहा सौः क्लीं ऐं श्रीं ह्रीं ऐं।**

इत्यष्टनवतिवर्णा राजश्यामला।

पूर्वोक्ताभिः अङ्गोपाङ्गप्रत्यङ्गपादुकाभिश्चतसृभिर्विद्याभिः सहिता इयं राजश्यामला हृच्चक्रे यष्टव्या।

३१. **लूं वाराहि लूं उन्मत्तभैरविपादुकाभ्यां नमः** इयं वार्ताल्यङ्गभूता लघुवार्ताली।

३२. **ॐ ह्रीं नमो वाराहि घोरे स्वप्नं ठः ठः स्वाहा।**
इयं स्वप्ने शुभाशुभवक्त्री वार्ताल्या उपाङ्गभूता स्वप्नवाराही।

३३. **ऐं नमो भगवति तिरस्करिणि महामाये पशुजनमनश्चक्षुस्तिरस्करणं कुरु कुरु हुं फट् स्वाहा।**

इयं वार्तालीप्रत्यङ्गभूता तिरस्करिणी।

३४. **ऐं ग्लौं हस्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं हसौं स्हौः श्री**अमुका-**नन्दनाथगुरुश्रीपादुकां पूजयामि नमः।** एषा वार्तालीगुरुपादुका।

**३५. ऐं ग्लौं ऐं नमो भगवति वार्तालि वार्तालि वार्तालि वाराहि वाराहि वराहमुखि वराहमुखि अन्धे अन्धिनि नमः। रुन्धे रुन्धिनि नमः। जम्भे जम्भिनि नमः। मोहे मोहिनि नमः। स्तम्भे स्तम्भिनि नमः। सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक्चित्तचक्षुर्मुखगतिजिह्वास्तम्भनं कुरु कुरु शीघ्रं वश्यं ऐं ग्लौं ठः ठः ठः ठः हुं अस्त्राय फट्।**

इति द्वादशोत्तरशताक्षरो महावाराहीमन्त्रः। पूर्वोक्ताभिश्चतसृभिः युक्ता इयं महावाराही आज्ञाचक्रे परिपूज्या।

**३६. क ए ई ल ह स क ह ल स क ल ह्रीं।** इति त्रयोदशाक्षरी श्रीपूर्तिविद्या। (ब्रह्मरन्ध्रे)

**३७. ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं हस्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं हसौं स्हौः श्री** अमुका-**नन्दनाथगुरु-श्रीपादुकां पूजयामि नमः** इति श्रीमहागुरुपादुका। (द्वादशान्ते)

इति रश्मिमाला।

## ३. अजपा गायत्री खण्डः

### *अजपासमर्पणम्*

**पूर्वेद्युः सूर्योदयमारभ्याद्य सूर्योदयपर्यन्तं षट्छताधिकैकविंशतिसहस्रसंख्याकमुच्छ्वासनिश्वासात्मकमजपागायत्रीजपं मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्ध्याज्ञाब्रह्मरन्ध्रमण्टपस्थितेभ्यो गणेश-ब्रह्म-विष्णु-रुद्र-जीवात्म-परमात्म-श्रीगुरुभ्यो यथाभागं समर्पयामि।।**

भागक्रमस्तु—

षट्छतं तु गणेशस्य षट्सहस्रं प्रजापतेः । षट्सहस्रं महाविष्णोः षट्सहस्रं पिनाकिनः ।।
जीवात्मनः सहस्रं तु सहस्रं परमात्मनः । गुरोरपि सहस्रं तु सर्वं ब्रह्मार्पणं भवेत् ।।

**मूलाधारमण्टपमध्ये चतुर्दलपद्मस्थिताय कुङ्कुमवर्णाय पुष्टिशक्तिसहिताय श्रीगणाधिपतये नमः, षट्छतमजपागायत्रीजपमहं निवेदयामि।। ॐ गणानां त्वा गणपतिँ हवामहे कविं कवीनामुपमश्रवस्तमम्। ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम्।। तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्तिः प्रचोदयात्।**

**स्वाधिष्ठानमण्टपमध्ये षड्दळपद्मस्थिताय सिन्दूरवर्णाय सरस्वतीसमेताय श्रीब्रह्मणे नमः, षट्सहस्रमजपागायत्रीजपं निवेदयामि। ॐ ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम्। श्येनो गृध्राणाँ स्वधितिर्वनानाँ सोमः पवित्रमत्येति रेफन्। वेदात्मनाय विद्महे हिरण्यगर्भाय धीमहि। तन्नो ब्रह्मा प्रचोदयात्।**

मणिपूरकमण्टपमध्ये दशदलमध्यस्थिताय नीलवर्णाय लक्ष्मीसमेताय श्रीमहाविष्णवे नमः, षट्सहस्त्रमजपागायत्री जपं निवेदयामि। ॐ तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः दिवीव चक्षुराततम्। तद्विप्रासो विपन्यवो जागृवाँसः समिन्धते। विष्णोर्यत्परमं पदम्। नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात्।

अनाहतमण्टपमध्ये द्वादशदलपद्मस्थिताय हेमवर्णाय श्रीपार्वतीसमेताय शिवाय नमः षट्सहस्त्रमजपागायत्रीजपं निवेदयामि। ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माऽधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिरो मे अस्तु सदाशिवोम्। तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्।

विशुद्धमण्टपमध्ये षोडशदळपद्मस्थिताय शुद्धस्फटिकसंकाशाय प्राणशक्तिसहिताय जीवात्मने नमः, सहस्त्रमजपागायत्रीजपं निवेदयामि। ओं असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम्। ज्योक् पश्येम सूर्यमुच्चरन्तमनुमते मृडया नः स्वस्ति। हंसहंसाय विद्महे परमहंसाय धीमहि। तन्नो हंसः प्रचोदयात्।

आज्ञामण्टपमध्ये द्विदळपद्मस्थिताय विद्युद्वर्णाय इच्छाशक्तिसहिताय श्रीपरमात्मने नमः, सहस्त्रमजपागायत्रीजपं निवेदयामि। ओं यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः परः स महेश्वरः। हंसहंसाय विद्महे परमहंसाय धीमहि। तन्नो हंसः प्रचोदयात्।

सहस्त्रदळमण्टपमध्ये सहस्त्रदळपद्मस्थिताय नानावर्णाय मोक्षशक्तिसहिताय श्रीगुरवे नमः, सहस्त्रमजपागायत्रीजपं निवेदयामि। नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा। तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः। स ब्रह्म स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट्। तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्। हंसहंसाय विद्महे परमहंसाय धीमहि। तन्नो हंसः प्रचोदयात्। (इति निवेद्य)

अद्य सूर्योदयमारभ्य श्वः सूर्योदयपर्यन्तमजपागायत्रीजपमहं करिष्ये।

अस्य श्री अजपागायत्रीमहामन्त्रस्य परमहंस ऋषिः, अव्यक्तगायत्री छन्दः, परमहंसो देवता। हं बीजम्, सः शक्तिः, सोहं कीलकम्। मम अजपागायत्री प्रसादसिद्ध्यर्थे जपे विनियोगः।

हंसहंसाय विद्महे अङ्गुष्ठाभ्यां नमः। परमहंसाय धीमहि तर्जनीभ्यां नमः। तन्नो हंसः प्रचोदयात् मध्यमाम्यां नमः। हंसहंसाय विद्महे अनामिकाभ्यां नमः। परमहंसाय धीमहि कनिष्ठिकाभ्यां नमः। तन्नो हंसः प्रचोदयात् करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः।

भूर्भुवस्सुवरोमिति दिग्बन्धः। ध्यानम्—

अग्नीषोमगरुद्द्वयं प्रणवकं बिन्दुत्रिनेत्रोज्ज्वलं
भास्वद्रुद्रमुखं शिवांघ्रियुगलं कालाग्निबाहुद्वयम्।

**उद्यद्भास्करकोटिकोटिसदृशं हंसं जगद्व्यापकं**
**नादब्रह्ममयं हृदम्बुजपुटे नीडे सदा भावयेत्।।** लमित्यादि पञ्चपूजा।
**हंसो गणेशो विधिरेष हंसो हंसो हरिः शंभुमयोऽपि हंसः।**
**जीवोऽपि हंसो गुरुरेव हंसश्चात्मापि हंसः परमात्महंसः।।**
**हंसहंसाय विद्महे परमहंसाय धीमहि। तन्नो हंसः प्रचोदयात्।।**

इति यथाशक्ति जपित्वा, हंसः इति विंशतिवारं जपेत्।।

## ४. नित्यानुष्ठान खण्डः

भूप्रार्थनादि मुखक्षालनान्तम्

**समुद्रवसने देवि पर्वतस्तनमण्डिते।**
**विष्णुपत्नि नमस्तुभ्यं पादचारं क्षमस्व मे।।**

इति भूमिं प्रार्थ्य धरणीतलन्यस्तवहन्नाडीपार्श्वपादमुत्थाय ग्रामाद्बहिः स्मार्तेन विधिना निर्वर्तितशौचक्रियः।

**आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च।**
**ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते।।**

इति मन्त्रेण दन्तधावनकाष्ठमभिमन्त्र्य, **ऐं ह्रीं श्रीं क्लीं कामदेवाय सर्वजनप्रियाय नमः** इति मन्त्रेण दन्तधावनं, **ऐं ह्रीं श्रीं ह्रीं** इति जिह्वोल्लेखनं च विधाय कफविमोचननासाशोधनदूषिकानिरसनपूर्वकं विहितविंशतिगण्डूषः **ऐं ह्रीं श्रीं श्रीं—ऐं ह्रीं श्रीं ओं श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ओं महालक्ष्म्यै नमः—ऐं ह्रीं श्रीं श्रीं ह्रीं क्लीं—ऐं ह्रीं श्रीं श्रीं सहकलह्रीं श्रीं**—इति मन्त्रचतुष्टयेन मुखं प्रक्षाल्य यथास्मृत्याचामेत्।

### *स्नानविधिः*

ततो नद्यादौ वैदिकस्नानोत्तरे **श्रीललिताप्रीत्यर्थं तान्त्रिकस्नानं करिष्ये** इति संकल्प्य, जले पुरतो हस्तमात्रं चतुरश्रमण्डलं परिगृह्य, तत्र—

**ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे। तेन सत्येन मे देव तीर्थं देहि दिवाकर।।**

इति सूर्यमभ्यर्थ्य,

**आवाहयामि त्वां देवि स्नानार्थमिह सुन्दरि। एहि गङ्गे नमस्तुभ्यं सर्वतीर्थसमन्विते।।**

इति गङ्गामर्थयित्वा **ऐं ह्रीं श्रीं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः क्रों** इत्यङ्कुशमुद्रया सूर्यमण्डलं भित्त्वा, ततो गङ्गादिसर्वतीर्थावाहनोत्तरं वं इति सलिलबीजेन सप्तवारमभिमन्त्र्य, मुहुर्मूलमावर्तयन् मूर्धनि त्रीनुदकाञ्जलीन् दत्वा, त्रिरपश्च पीत्वा, **क-१५ श्रीललितां तर्पयामि** इति त्रिस्तर्पणं, मूलेन त्रिः प्रोक्षणं च आत्मनो योनिमुद्रया विदध्यात्।

गृहे तु विना तर्पणम्। अशक्तौ च स्मार्तेन पथा मन्त्रभस्मस्नानयोरन्यतरं निर्वर्त्य मूलेन त्रिराचमनप्रोक्षणे केवलं कुर्यात्।

अथ धौते वाससी परिधाय विधृतपुण्ड्रो वैदिकीं संध्यामभिवन्द्य तान्त्रिकीमाचरेत्।

## *प्रातःसंध्याविधिः*

मूलेन आचम्य, मूलेन त्रिः प्राणानायम्य, **ममोपात्तसमस्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं** (देशकालौ संकीर्त्य) **श्रीराजराजेश्वरीप्रीत्यर्थं** (देवीमानरीत्या संकल्प्य) **श्रीविद्याप्रातःसंध्यामुपासिष्ये।**

**श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं**
**सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम्।**
**वीरान्द्व्यष्ट चतुष्कषष्टिनवकं वीरावलीपञ्चकं**
**श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम्।।**

गुरुपादुकामनुमुच्चार्य, सुमुखादिभिः पञ्चमुद्राभिः श्रीगुरुं प्रणम्य, मूलमन्त्रम् ऋष्यादिध्यानान्तं विधाय, स्वपुरतः धेनुमुद्रया जलममृतीकृत्य, मूलविद्यया अष्टवारमभिमन्त्र्य, तेन जलेन षोडशस्वरैः सबिन्दुभिः [**अं नमः, आं नमः + + अः नमः** इति मार्जयित्वा दक्षिण हस्तेन, जलमादाय, कादिमान्तै? स्पर्शवर्णैः मूलविद्ययां च [ **कं नमः, खं नमः + + मं नमः, क-५ ह-६ स-४** इति ] जलं पीत्वा, यादिदशभिः मूलविद्यया च [ **यं नमः, रं नमः + + क्षं नमः, क-५ ह-६ स-४** इति ] शिरसि प्रोक्ष्य, सूर्यमण्डले देवीं यथोक्तरूपां ध्यायेत्।।

ध्यानम्—

**सकुङ्कुमविलेपनामलिकचुम्बिकस्तूरिकां समन्दहसितेक्षणां सशरचापपाशाङ्कुशाम्।**
**अशेषजनमोहिनीमरुणमाल्यभूषाम्बरां जपाकुसुमभासुरां जपविधौ स्मरेदम्बिकाम्।।**

**चतुर्भुजे चन्द्रकलावतंसे कुचोन्नते कुङ्कुमरागशोणे।**
**पुण्ड्रेक्षुपाशाङ्कुशपुष्पबाणहस्ते नमस्ते जगदेकमातः।।**

दक्षिणहस्ते जलमादाय, **लं वं रं यं हं** इति त्रिरभिमन्त्य, **क-५ ह-६ स-४** इति च त्रिरभिमन्त्य, तज्जलबिन्दुभिः वामाङ्गुष्ठानामिकाभ्यां **क-५ ह-६ स-४** इति स्वशिरसि त्रिः प्रोक्ष्य, अवशिष्टजलं वामहस्ते निधाय, तेजोरूपं तज्जलं इडयाऽऽकृष्य, स्वदेहान्तस्थितं सकलकलुषं प्रक्षाळितं भावयित्वा, तज्जलं कृष्णवर्णं विभाव्य, पिङ्गळया बहिर्निर्गतं मत्वा, तज्जलं पुनः दक्षिणहस्ते कृत्वा, स्ववामभागे ज्वलद्वज्रशिलां ध्यात्वा, **ॐ ऐं ह्रीं श्रीं श्लीं पशु हुं फट्** इति तस्यां शिलायामास्फाल्य, हस्तौ प्रक्षाल्य, मूलविद्यया जलमादाय, **क-१५** इति प्रवहन्नाड्या सहस्रदळकमलगतपरमामृतेनैकीभूतं विभाव्य, राजदन्तविवरान्नेत्रमार्गेण निर्गमय्य, तज्जलं वामकरे निधाय, तेन जलेन **अमृतमालिनी स्वाहा** इति मन्त्रेण सर्वाङ्गुलीभिः स्वशिरसि त्रिः प्रोक्ष्य, **ॐ ऐं ह्रीं श्रीं क-५ आत्मतत्वं शोधयामि स्वाहा, ॐ ऐं ह्रीं श्रीं ह-६ विद्यातत्वं शोधयामि स्वाहा, ॐ ऐं ह्रीं श्रीं स-ॐ ऐं ह्रीं श्रीं शिवतत्वं शोधयामि स्वाहा, ॐ ऐं ह्रीं श्रीं स-ॐ ऐं ह्रीं श्रीं शिवतत्वं शोधयामि स्वाहा, ॐ ऐं ह्रीं श्रीं ह-६ विद्यातत्वं शोधयामि स्वाहा, ॐ ऐं ह्रीं श्रीं क-५ आत्मतत्वं शोधयामि स्वाहा। ४ क-१५ सर्वतत्वं शोधयामि स्वाहा** इति त्रिधा। एवं नवधा जलं पिबेत्।

अर्घ्यमञ्जलिनाऽऽदायोत्थाय **क-५ वाग्भवेश्वरि विद्महे ह-६ कामेश्वरि च धीमहि, स-४ तन्नः शक्तिः प्रचोदयात् श्रीमहात्रिपुरसुन्दरीश्रीपादुकायै एषोऽर्घ्यः स्वाहा** इति त्रिरर्घ्यं दत्वा, **ह्रां ह्रीं ह्रूं सः श्रीसूर्य एष तेऽर्घ्यः स्वाहा** इति सूर्याभिमुखमर्घ्याञ्जलित्रयं दत्वा, **क-१५ श्रीमहात्रिपुरसुन्दरीश्रीपादुकां तर्पयामि नमः** इति देवीं त्रिः संतर्प्य, **ह्रां ह्रीं ह्रूं सः श्रीसूर्यं तर्पयामि नमः** इति सूर्यं त्रिः संतर्प्य, मूलाधारे मूलविद्याप्रथमकूटं तटित्कोटिसमप्रभं संचिन्त्य, तत्तेजः सुषुम्नावर्त्मना ब्रह्मरन्ध्रं नीत्वा, वहन्नासाध्वना आकाशस्थवह्निमण्डले समावाह्य तत्तेजसोद्भूतां वाग्भवेश्वरीं ध्यायेत्। तद्यथा—

**पीतां पीताम्बरां पीतस्रग्विभूषानुलेपनाम्।**
**तटित्कोटिसमाभासां बालामक्षस्रगुज्ज्वलाम्॥**
**पुस्ताभयकराम्भोजां वह्निपीठे निषेदुषीम्।**
**वाग्मिनीं वाग्भवोद्भूतां त्रीक्षणां सुस्मितां स्मरेत्॥** इति

ततः **क-५ त्रिपुरावागीश्वरीश्रीपादुकां पूजयामि नमः** इति गन्धपुष्पाक्षतैस्त्रिः संपूज्य, **ऐं त्रिपुरादेवि विद्महे वाग्भवेश्वरि धीमहि, तन्नो मुक्तिः प्रचोदयात्। श्री त्रिपुरावागीश्वरी श्रीपादुकायै अर्घ्यं कल्पयामि स्वाहा** इति वाग्भवगायत्रीमुच्चार्य त्रिरर्घ्याञ्जलिमुत्क्षिप्य, पुनः प्रथमकूटमुच्चार्य, **त्रिपुरावागीश्वरी श्रीपादुकां तर्पयामि नमः** इति त्रिः संतर्प्य, श्रीगुरुपादुकां ध्यात्वा, प्राणायामत्रयं च कृत्वा, मातृकान्यासं कुर्यात्। पुनः ऋष्यादिकरषडङ्गन्यासं कृत्वा।

**ॐ ऐं ह्रीं श्रीं क-५ वाग्भवेश्वरि विद्महे ह-६ कामेश्वरि च धीमहि स-ॐ ऐं ह्रीं श्रीं तन्नः शक्तिः प्रचोदयात्**—इति तुरीयगायत्रीं, ततः **ऐं त्रिपुरादेवि विद्महे वाग्भवेश्वरि धीमहि, तन्नो मुक्तिः प्रचोदयात्**—इति वाग्भवकूटगायत्रीं, ततो मूलविद्यां, ततो वाग्भवकूटं च यथाशक्ति जपेत्।

## नाथपारायणम्

प्रातर्मूलाधारगते कमले वह्निमण्डले।
वाग्बीजरूपां नित्यां तां विद्युत्पटलभासुराम्।।
पुष्पबाणेक्षुकोदण्डपाशाङ्कुशलसत्कराम्।
स्वेच्छागृहीतवपुषं युगनित्याक्षरात्मिकाम्।।
घटिकावरणोपेतां परितः प्राञ्जलीनथ।
ज्ञानमुद्रावरकरान् वाग्भवोपास्तितत्परान्।
नवनाथान् स्मरेन्मूलपङ्कजे योनिमण्डले।। इति ध्यात्वा।

ॐ ऐं ह्रीं श्रीं क-१५ * दिननित्यविद्या हंसः अं आं इं ईं उं ऊं ऋं ॠं ह्रीं श्रीं अं प्रकाशानन्दनाथरूपिणीश्रीमहात्रिपुरसुन्दरीश्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः लृं लॄं एं ऐं ओं औं अं अः ह्रीं श्रीं लृं विमर्शानन्दनाथ०

ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः कं खं गं घं ङं ह्रीं श्रीं कं आनन्दानन्दनाथ०

ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः चं छं जं झं ञं ह्रीं श्रीं चं ज्ञानानन्दनाथ०

ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः टं ठं डं ढं णं ह्रीं श्रीं टं सत्यानन्दनाथ०

ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः तं थं दं धं नं ह्रीं श्रीं तं पूर्णानन्दनाथ०

ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः पं फं बं भं मं ह्रीं श्रीं पं स्वभावानन्दनाथ०

ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः यं रं लं वं शं ह्रीं श्रीं यं प्रतिभानन्दनाथ०

ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः षं सं हं ळं क्षं ह्रीं श्रीं षं सुभगानन्दनाथ०

इति नवनाथात्मकत्वेन मूलविद्यां जपेत्।।

ततस्तद्दिननित्यविद्यां यथाशक्ति जपेत्। इति कालनित्याजपः।।

## घटिकापारायणम्

अकारमारभ्य क्षकारावधि विसर्गवर्जं पञ्चाशद्घटिका देवीमानसिद्धाः। एकैकस्य दिनस्य षष्टिर्घटिकाः।

---

* दिनं = देवीमानवर्षः। नित्या = देवीमानमासः। विद्या = देवीमानदिवसः

तस्मात् कलियुगस्य प्रथमदिवसे अकारादिक्षकारान्तानां पञ्चाशतो घटिकानां, पुनः अकारादिलृकारान्तानां दश घटिकानां, एवं षष्टिघटिकानां पारायणं कर्त्तव्यम्। युगस्य द्वितीयदिवसे एकारमारभ्य क्षकारान्तं पठित्वा पुनः अकारमारभ्य ङकारपर्यन्तं पठितव्यम्। युगस्य तृतीयदिवसे चकारमारभ्य क्षकारपर्यन्तं पठित्वा पुनः अकारमारभ्य णपर्यन्तं पाठ्यम्। युगस्य चतुर्थदिवसे तकारमारभ्य क्षावधि पठित्वा पुनः अकारात् मपर्यन्तं पाठ्यम्। युगस्य पञ्चमदिवसे यवर्णमारभ्य क्षावधिपठित्वा पुनः अकारमुपक्रम्य क्षावधि पठेत्। एवमेव प्रतिपञ्चवासरं पर्यायेण पारायणं कुर्यात्। तद्यथा—

प्रथमदिवसे तथा षष्ठैकादशादिदिवसेषु—

**ॐ ऐं ह्रीं श्रीं क-१५** दिननित्यविद्या **हंसः अकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः आकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

* * *

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः ळकारकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः क्षकारकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः अकारघटिकारूपिणीमहात्रिपुरसुन्दरीं पूजयामि नमः**

* * *

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः लृकारकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

द्वितीयदिवसे तथा सप्तमद्वादशादिदिवसेषु—

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः एकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

* * *

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः क्षकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः अकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

* * *

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः ङकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

तृतीयदिवसे तथा अष्टमत्रयोदशादिदिवसेषु—

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः चकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

* * *

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः क्षकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः अकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

* * *

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः णकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

चतुर्थदिवसे तथा नवमचतुर्दशादिदिवसेषु—

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः तकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

* * *

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः क्षकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः अकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

* * *

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः मकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

पञ्चमदिवसे तथा दशमपञ्चदशादिदिवसेषु—

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः यकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

* * *

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः क्षकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः अकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः क्षकारघटिकारूपिणी महात्रिपुरसुन्दरीं पूजयामि नमः**

इति घटिकापारायणम्।

## *उपस्थानम्*

**त्रिपुरा सर्वरूपाणि चराणि स्थावराणि च । सायं प्रातस्तु मध्याह्ने सर्वदा सा परा स्थिता।।**
**उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि । ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि यथासुखम्।।**

**गुं गुरुभ्यो नमः। दुं दुर्गायै नमः। गं गणपतये नमः। क्षं क्षेत्रपालकाय नमः। सं सरस्वत्यै नमः। पं परमात्मने नमः।**

**श्रीशिवाचार्यवर्याद्यां शंकराचार्यमध्यमाम् । अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ।।**
**दिव्यश्रीपादुकां ध्यात्वा परितुष्याम्यहं सदा । श्रीगुरुं परमं वन्दे पश्चात्तं परमं गुरुम् ।।**
**परमेष्ठिगुरुं वन्दे परापरगुरुं भजे । आनन्दाख्यगुरुं वन्दे तच्छिष्यस्तत्कृपावशः ।।**
**श्रीनाथादींश्च संपूज्य संप्रदायक्रमादहम् ।**

योगगोत्रं समुच्चार्य [ परमेष्ठिगुरु-परमगुरु-स्वगुरुनामानि आनन्दनाथशब्दवर्जमुच्चार्य ] **आनन्दस्वच्छन्दचिद्रूपानन्दगोत्रः** अमुका-**नन्दनाथ** अमुकशर्माहं **भो अभिवादये।।**

इति प्रातःसंध्याविधिः।

## *अथ माध्याह्निकविधिः*

प्राणायामादि सूर्यतर्पणान्तं प्रातःसंध्यावत् विधाय।

अनाहते मूलविद्याद्वितीयकूटं रक्तवर्णं ध्यायन्, तत्तेजः सुषुम्नामार्गेण ब्रह्मरन्ध्रं नीत्वा वहन्नासापुटाध्वना निस्सार्य सूर्यमण्डले समावाह्य, तदुद्भूतां कामेश्वरीं ध्यायेत्। तद्यथा—

**रक्तां सुरक्ताम्बरभूषणाढ्यां पाशाङ्कुशाभीतिवरान् दधानाम्।**

**शुचिस्मितामुत्कटयौवनाढ्यां कामेश्वरीं संस्मरत त्रिणेत्राम्।।**इति।

**४ ह-६ श्रीत्रिपुराकामेश्वरीश्रीपादुकां पूजयामि नमः।**

इति त्रिः संपूज्य, **क्लीं त्रिपुरादेवि विद्महे कामेश्वरि च धीमहि। तन्नः क्लिन्ना प्रचोदयात्—** इति कामराजकूटगायत्रीमुच्चार्य **श्रीत्रिपुराकामेश्वरीश्रीपादुकायै अर्घ्यं कल्पयामि स्वाहा**—इति त्रिरर्घ्याञ्जलिमुक्षिप्य पुनः कामराजकूटमुच्चार्य, **श्रीत्रिपुराकामेश्वरीश्रीपादुकां तर्पयामि नमः**—इति त्रिः संतर्प्य, श्रीगुरुपादुकां ध्यात्वा प्राणायामत्रयं च कृत्वा पूर्ववन्मातृकां विन्यस्य पुनः ऋष्यादिकरषडङ्गन्यासं कृत्वा।

**ॐ ऐं ह्रीं श्रीं क-५ वाग्भवेश्वरि विद्महे ह-६ कामेश्वरि च धीमहि स-४ तन्नः शक्तिः प्रचोदयात्**—इति तुरीयगायत्रीं, ततः **क्लीं त्रिपुरादेवि विद्महे कामेश्वरि च धीमहि, तन्नः क्लिन्ना प्रचोदयात्**—इति कामराजकूटगायत्रीं, ततो मूलविद्यां ततः त्रिकामराजकूटं च यथाशक्ति जपेत्।

## *तत्वपारायणम्*

**मध्याह्ने हृदयाम्भोजकर्णिके सूर्यमण्डले । कामराजात्मिकां देवीमलक्तकुसुमारुणाम् ।।**
**प्रसूनबाणपुण्ड्रेक्षुचापपाशाङ्कुशान्विताम् । परितः स्वात्ममुख्याभिः षट्त्रिंशत्तत्वशक्तिभिः ।।**
**रक्तमाल्याम्बरालेपभूषाभिः परिवारिताम् । युगनित्याक्षरमयीं घटिकावरणां स्मरेत् ।।**

इति देवीं ध्यात्वा—

*ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः अं शिवतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः कं शक्तितत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः खं सदाशिवतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः गं ईश्वरतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः घं शुद्धविद्यातत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः ङं मायातत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः चं कलातत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः छं अविद्यातत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः जं रागतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः झं कालतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः ञं नियतितत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः टं पुरुषतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः ठं प्रकृतितत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः डं अहंकारतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः ढं बुद्धितत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः णं मनस्तत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः तं श्रोत्रतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः थं त्वक्तत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः दं चक्षुस्तत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः धं जिह्वातत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः नं घ्राणतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः पं वाक्तत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः फं पाणितत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः बं पादतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः भं पायुतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः मं उपस्थतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क-१५ दि + हंसः यं शब्दतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।

---

* अत्र तत्तद्दिनतत्वमारभ्य तत्पूर्वदिनतत्वपर्यन्तं षट् त्रिंशदिति क्रमः।

**ॐ ऐं ह्रीं श्रीं क-१५** दि **+ हंसः रं स्पर्शतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क-१५** दि **+ हंसः लं रूपतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क-१५** दि **+ हंसः वं रसतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क-१५** दि **+ हंसः शं गन्धतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क-१५** दि **+ हंसः षं आकाशतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क-१५** दि **+ हंसः सं वायुतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क-१५** दि **+ हंसः हं वह्नितत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क-१५** दि **+ हंसः ळं जलतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क-१५** दि **+ हंसः क्षं पृथ्वीतत्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।**

इति तत्वपारायणम्।

**अथ उपस्थानं प्रातःसंध्यावत्।**

**त्रिपुरा सर्वरूपाणि...अभिवादये।।**

इति माध्याह्निकविधिः।

## *सायंसंध्याविधिः*

प्राणायामादि सूर्यतर्पणान्तं प्रातःसंध्यावत् विधाय।

आज्ञाचक्रे हक्षाब्जे मूलविद्यातृतीयकूटं शुद्धस्फटिकवर्णं ध्यायन् तत्तेजः सुषुम्नामार्गेण ब्रह्मरन्ध्रं नीत्वा वहन्नासापुटाध्वना आकाशस्थसोममण्डले समावाह्य तदुद्भूतां अमृतेश्वरीं वृद्धां ध्यायेत्। तद्यथा—

**शुक्लां शुक्लाम्बरालेपस्त्रग्विभूषाविभूषिताम्। जटाजूटत्रयां नेत्रत्रयोद्धासिमुखाम्बुजाम्।।**
**ईषत्स्फुटितदंष्ट्रां च भैरवीरूपमास्थिताम्। जरापलितसंकीर्णां लम्बमानपयोधराम्।।**
**पाशाङ्कुशौ पुस्तकं च स्फटिकाक्षस्त्रजं करैः।** दधानां शक्तिबीजोत्थां **पूर्णेन्दोर्मण्डले स्थिताम् ।।**
**ध्यायेदाद्यां परां शक्तिं शक्तिमद्भिर्निषेविताम्। भोगमोक्षप्रदां शान्तामनन्तामतेश्वरीम्।।** इति।

**४ स-४ श्रीत्रिपुराऽमृतेश्वरीश्रीपादुकां पूजयामि नमः** इति त्रिः संपूज्य। **पुनः सौः त्रिपुरा देवि विद्महे शक्तीश्वरि च धीमहि, तन्नोऽमृता प्रचोदयात्** इति तार्तीयीकगायत्रीमुच्चार्य **श्रीत्रिपुराऽमृतेश्वरीश्रीपादुकायै अर्घ्यं कल्पयामि स्वाहा** इति त्रिरर्घ्याञ्जलिमुक्षिप्य पुनः शक्तिकूटमुच्चार्य **श्रीत्रिपुराऽमृतेश्वरीश्रीपादुकां तर्पयामि नमः**—इति त्रिः संतर्प्य श्रीगुरुपादुकां ध्यात्वा प्राणायामत्रयं च कृत्वा पूर्ववन्मातृकां विन्यस्य पुनः ऋष्यादिकरषडङ्गन्यासं कृत्वा।

ॐ ऐं ह्रीं श्रींक-५ वाग्भवेश्वरि विद्महे ह-६ कामेश्वरि च धीमहि स-४ तन्नः शक्तिः प्रचोदयात्। इति तुरीयगात्रीं सौः त्रिपुरादेवि विद्महे शक्तीश्वरि च धीमहि। तन्नोऽमृता प्रचोदयात्। इति शक्तिकूटगायत्रीं ततो मूलविद्यां ततः शक्तिकूटं च यथाशक्ति जपेत्।

## *तिथिनित्यापारायणम्*

ॐ ऐं ह्रीं श्रीं अं ऐं सकलह्रीं नित्यक्लिन्ने मदद्रवे सौः अं कामेश्वरीनित्यारूपिणी-श्रीमहात्रिपुरसुन्दरीश्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं आं ऐं भगभुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोनि भगनिपातिनि सर्वभगवशंकरि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चे क्षुभ क्षोभय सर्वसत्वान् भगेश्वरि ऐं ब्लूं जं ब्लूं भें ब्लूं मों ब्लूं हें ब्लूं हें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हर ब्लें ह्रीं आं भगमालिनीनित्यारूपिणीश्रीमहात्रिपुरसुन्दरीं श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं इं ॐ ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा इं नित्यक्लिन्नानित्या रूपिणीश्रीमहात्रिपुरसुन्दरीं श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं ईं ॐ क्रों भ्रों क्रौं भ्रौं छ्रौं ज्रौं स्वाहा ईं भेरुण्डानित्यारूपिणीश्रीमहात्रिपुरसुन्दरीं श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं उं ॐ ह्रीं वह्निवासिन्यै नमः उं वह्निवासिनीनित्यारूपिणीश्रीमहात्रिपुरसुन्दरीं श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं ऊं ह्रीं क्लिन्ने ऐं क्रों नित्यमदद्रवे ह्रीं ऊं महावज्रेश्वरीनित्यारूपिणीश्रीमहात्रिपुरसुन्दरीं श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं ॠं ह्रीं शिवदूत्यै नमः ॠं शिवदूतीनित्यारूपिणीश्रीमहात्रिपुरसुन्दरीं श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं ॠं ओं ह्रीं हुं खे च छे क्षः स्त्रीं हुं क्षें ह्रीं फट् ॠं त्वरितानित्यारूपिणीश्रीमहात्रिपुरसुन्दरीं श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं लृं ऐं क्लीं सौः लृंकुलसुन्दरीनित्यारूपिणीश्रीमहात्रिपुरसुन्दरीं श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं ॡं हस्क्लर्डैं हस्क्लर्डीं हस्क्लरडौः ॡं नित्यानित्यारूपिणीश्रीमहात्रिपुरसुन्दरीं श्रीपादुकां पूजयामि नमः।।

**ॐ ऐं ह्रीं श्रीं एं ह्रीं फ्रें स्त्रूं क्रों आं क्लीं ऐं ब्लूं नित्यमदद्रवे हुं फ्रें ह्रीं एं नीलपताकानित्यारूपिणीश्रीमहात्रिपुरसुन्दरीं श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं ऐं भ्म्र्यूं ऐं विजयानित्यारूपिणीश्रीमहात्रिपुरसुन्दरीं श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं ओं स्वौं ॐ सर्वमङ्गळानित्यारूपिणीश्रीमहात्रिपुरसुन्दरीं श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं औं ॐ नमो भगवति ज्वालामालिनि देवदेवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति ज्वल ज्वल प्रज्वल प्रज्वल ह्रां ह्रीं ह्रूं र र र र र र र हुं फट् स्वाहा औं ज्वालामालिनीनित्यारूपिणीश्रीमहात्रिपुरसुन्दरीं श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं अं च्क्रौं अं चित्रानित्यारूपिणीश्रीमहात्रिपुरसुन्दरीं श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं अः क-१५ अः ललितामहानित्यारूपिणीश्रीमहात्रिपुरश्रीपादुकां पूजयामि नमः।।**

इति तिथिनित्यापारायणम्।

पूर्वोक्ते तिथिनित्यापारायणे प्रतिमन्त्रं ॐ ऐं ह्रीं श्रीं इत्यनन्तरं क-१५ दिननित्यविद्या हंसः इति योजनीयम्। पारायणे च तत्तत्तिथिनित्यामारभ्य तत्पूर्वतिथिनित्यापर्यन्तमिति क्रमः।

**अथ उपस्थानं प्रातःसंध्यावत्।**

**त्रिपुरा सर्वरूपाणि...अभिवादये।।**

इति सायंसंध्याविधिः।

## *तुरीयसंध्याविधिः*

प्राणायामादितत्वाचमनपर्यन्तं प्रातःसंध्यावत् विधाय।

सहस्रारकमले मूलविद्यातुरीयकूटं त्रयोदशाक्षररूपं पद्मरागसमप्रभं ध्यात्वा, वहन्नासापुटेन तारकमण्डलाद् बहिः परमाकाशे समावाह्य, तदुद्भूतां भगवतीं तेजोरूपां ध्यायन् **हसकल हसकहल सकलह्रीं** इति तुरीयकूटमुच्चार्य **श्रीमहात्रिपुरसुन्दरीश्रीपादुकां पूजयामि नमः**—इति त्रिः संपूज्य, पुनः **क-५ वाग्भवेश्वरि विद्महे, ह-६ कामेश्वरि च धीमहि। स-४ तन्नः शक्तिः प्रचोदयात्**—इति तुरीयगायत्रीमुच्चार्य **श्रीमहात्रिपुरसुन्दरीश्रीपादुकायै अर्घ्यं कल्पयामि स्वाहा**—इति त्रिरर्घ्यं दत्वा पुनस्तुरीयकूटमुच्चार्य **श्रीमहात्रिपुरसुन्दरीश्रीपादुकां तर्पयामि** इति त्रिः संतर्प्य, श्रीगुरुपादुकामुच्चार्य, ततः तुरीयगायत्रीं ततो मूलविद्यां, ततस्तुरीयकूटं च यथाशक्ति जपेत्।

**अथ उपस्थानं प्रातःसन्ध्यावत्।**

**त्रिपुरा सर्वरूपाणि...अभिवादये।।**

इति तुरीयसंध्याविधिः।

## नामपारायणविधिः

तत्रादौ साधको विविक्तदेशे नद्यादितीरे एकान्ते स्वगृहे वा स्वासनमास्तीर्य **ॐ ऐं ह्रीं श्रीं ह्रीं आधारशक्तिकमलासनाय नमः** इत्यासनं संपूज्य तत्र प्राङ्मुखः स्वस्तिकाद्यासनेनोपविश्य गुरुगणपति-स्वेष्टदेवताः प्रणम्य मूलेन प्राणायामत्रयपूर्वकं संक्षेपतो भूतशुद्धिं प्राणप्रतिष्ठां मातृकान्यासं च कृत्वा मस्तकदक्षबाहुमूलादिषट्त्रिंशत्स्थानेषु प्रतिस्थानं षोडशदळपत्रं विभाव्य तेष्वकारादिक्षकारान्तान्षटत्रिंशत्तत्त्ववर्णान् प्रत्येकं षोडशस्वरसंयुक्तान्विभाव्य मध्ये तत्प्रथमाक्षरं विन्यस्य पूर्वादिदलेषु तत्तदक्षरविकृतषोडशवर्णांस्तदादिकान्विन्यसेदित्येवं पूर्णमण्डल-वर्णान्विन्यस्य पुनस्तद्दिननित्यविद्यासहितमूलविद्यया प्राणायामत्रयं कृत्वा

शिरसि— **ॐ ऐं ह्रीं श्रीं दक्षिणामूर्तिऋषये नमः।**

मुखे— **ॐ ऐं ह्रीं श्रीं पंक्तिच्छन्दसे नमः।**

हृदये— **ॐ ऐं ह्रीं श्रीकालनित्यारूपिण्यै श्रीमहात्रिपुरसुन्दर्यै नमः** इति ऋष्यादिकं विन्यस्य **मम मोक्षार्थे नामपारायणजपे विनियोगः** इति कृताञ्जलिरुक्त्वा तद्दिननित्यविद्याक्षरैः त्रिभिर्द्विरावृत्त्या यथाविधि करषडङ्गन्यासं चतुरासनन्यासं वाग्देवताष्टकन्यासं च विधाय।

**रक्तां रक्ताम्बरां रक्तस्रग्विभूषानुलेपनाम्।**
**पाशाङ्कुशेक्षुकोदण्डप्रसूनविशिखां स्मरेत्।।**

इति कालनित्यां हृदये ध्यात्वा हृदये श्रीचक्रं कालचक्रमध्यगतं विभाव्य तत्र देवीं सावरणां कालनित्याभिश्च परिवृतां ध्यात्वा मानसैरुपचारैः संपूज्य पारायणजपमारभेत।

तत्रादौ अङ्गविद्याजपः—

**ॐ ऐं ह्रीं श्रीं क-१५** दि **+ हंसः अ हसौः हंसः**

**ॐ ऐं ह्रीं श्रीं क-१५** दि **+ हंसः आ हसौः हंसः**

* * * * *

**ॐ ऐं ह्रीं श्रीं क-१५** दि **+ हंसः क्ष हसौः हंसः**

इति एकपञ्चाशद्विद्याभिः सह मूलविद्यां जपित्वा ततः केवलमूलविद्यां त्रिर्जपित्वा। **ऐं वद वद वाग्वादिनि ऐं क्लीं क्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु कुरु क्लीं सौः मोक्षं कुरु कुरु हसौः स्हौः** इति दीपिनीविद्यामेकवारं जपित्वा ततो गुरुपादुकामेकवारं जपित्वा पुनः चत्वारिंशद्विद्याभिः सह मूलविद्यां जपेत्।

तद्यथा—

**ॐ ऐं ह्रीं श्रीं मूलं आ क्षा हसाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ई ळा हसाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ऊ हा हसाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ॠ सा हसाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ॡ षा हसाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ऐ शा हसाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं औ वा हसाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं अः ला हसाई हंसः**

इत्यष्टधा जपित्वा

पुनः—

**ॐ ऐं ह्रीं श्रीं मूलं आ क्षाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं अ क्षाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं इ ळाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ई ळाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं उ हाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ऊ हाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ऋ साई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ॠ साई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ऌ षाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ॡ षाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ए शाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ऐ शाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ओ वाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं औ वाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं अः लाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं अं लाई हंसः**

इति षोडशधा जपित्वा

**ॐ ऐं ह्रीं श्रीं मूलं अ काई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं इ चाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं उ टाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ऋ ताई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ऌ पाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ए याई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ओ शाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं अं ळाई हंसः**

इत्यष्टधा जपित्वा

**ॐ ऐं ह्रीं श्रीं मूलं आ क्षाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ई ळाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ऊ हाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ॠ साई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ॡ षाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं ऐ शाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं औ वाई हंसः**
**ॐ ऐं ह्रीं श्रीं मूलं अः लाई हंसः**

इत्यष्टधा जपित्वा

ततः षोडशावान्तरयुगभिन्ने महायुगे यदेव युगं भविष्यति तदक्षरमारभ्य सर्वाभिर्दिननित्यविद्याभिः सह मूलं जपेत्। अयमङ्गविद्याजपो वर्गद्वयस्याप्यादौ प्रत्यहं कार्यः।

अथ प्रथमदिने ।। **ॐ ऐं ह्रीं श्रीं मूलं अ आई हंसः। ॐ ऐं ह्रीं श्रीं मूलं अ काई हंसः...ॐ ऐं ह्रीं श्रीं मूलं अ क्षाई हंसः। ३६।। पुनः ॐ ऐं ह्रीं श्रीं मूलं आ आई हंसः। ॐ ऐं ह्रीं श्रीं मूलं आ काई हंसः...ॐ ऐं ह्रीं श्रीं मूलं आ क्षाई हंसः। ३६।। एवं इ आ, इ का, इ खा...इ**

**क्षा। ३६।। ई आ, ई का...ई क्षा। ३६।।** एवम् **उ ऊ ऋ ॠ ऌ ॡ ए ऐं ओ औ अं अः—** एतेषां च **अः आई हंसः। अः काई हंसः...अः क्षाई हंसः।** इत्यन्तं जपेत्। एवं षट्सप्तत्युत्तरपञ्चशतसंख्याको जपो भवति मूलविद्यायाः। अत्र पारायणे प्रथमं तद्दिनयुगाक्षरात् षोडशस्वरभिन्नादुत्पन्नषट्सप्तत्युत्तरपञ्चशतविद्याभिः सह मूलं जपित्वा पश्चात्तद्दिनाक्षरजनितविद्याभिः तावत्संख्याभिः सह प्रोक्तक्रमेण मूलं जपेत्। युगाक्षरदिनाक्षरे तु तद्दिननित्यविद्यायाः प्रथमाक्षरं द्वितीयाक्षरं च बोध्यम्। युगाक्षरोत्थविद्याजपे विशेषस्तु— यस्मिन्युगे यत्स्वरयुतं युगाक्षरं भवति तत्स्वरमारभ्य प्रतिस्वरं षाट्त्रिंशत्क्रमेण तद्विसर्गान्तिमविद्यापर्यन्तं जपित्वा पुनस्तदक्षरस्य प्रथमस्वरमारभ्य आरब्धस्वरस्य पूर्वस्वरान्तिमविद्यावधि जपेत्। तदा मूलस्य ५७६ जपो भवति। अत्र युगस्तु षट्त्रिंशद्दिनात्मको भवति। प्रागुक्तपूर्णण्डलवर्णेषु ५७६ संख्याकेषु एकैकाक्षरस्य एकैकयुगं प्रति युगाक्षरत्वं च भवति। एतत्सर्वं दिननित्यविद्याक्रमं च गुरुमुखादेव जानीयात्। एवं द्विपञ्चाशदुत्तरैकादशशतसंख्याको जपो भवति मूलस्य। अङ्गविद्यायास्तु एकैकवर्गादौ एकनवतिसंख्याकः। तेन वर्गद्वयादौ जपो द्व्यशीत्युत्तरशतसंख्याको भवति। केवलं मूलजपोऽपि वारचतुष्टयं त्रिस्त्रिरावृत्त्या द्वादशधा भवति। एवं संभूय १३४६ संभवन्ति मूलस्य। एवमुक्तसंख्याकजपमुक्तविधिना कृत्वा मूलं त्रिर्जपित्वा ४ मूलं **डरलकसहैं हसकलरडीं हसकलरडौः** इत्युत्तीर्णविद्यां सकृज्जपित्वा **मम सकलमनोरथान् साधय साधय तुभ्यं नमः** इति प्रार्थनीविद्यां कृताञ्जलिः सकृज्जपेत्। इति वर्गद्वयस्याप्यन्ते बोध्यम्। इत्थं पारायणजपं कृत्वा स्तोत्रमिदं पठेत्। तद्यथा—

**क्ष्माम्ब्वग्नीरणखार्केन्दुयष्टृप्राययुगाक्षरैः । मातृभैरवगां वन्दे देवीं त्रिपुरभैरवीम् ।।**
**कादिवर्गाष्टकाकारसमस्ताष्टकविग्रहाम् । अष्टशक्त्यावृतां वन्दे देवीं त्रिपुरभैरवीम् ।।**
**स्वरषोडशकानां तु षट्त्रिंशद्भिः परापरैः । षट्त्रिंशत्तत्वगां वन्दे देवीं त्रिपुरभैरवीम् ।।**
**षट्त्रिंशत्तत्वसंस्थाप्यशिवचन्द्रकलास्वपि । कादितत्वान्तरां वन्दे देवीं त्रिपुरभैरवीम् ।।**
**आईमायाद्वयोपाधिविचित्रेन्दुकलावतीम् । सर्वात्मिकां परां वन्दे देवीं त्रिपुरभैरवीम् ।।**
**षडध्वपिण्डयोनिस्थमण्डलत्रयकुण्डलीम् । लिङ्गत्रयात्मिकां वन्दे देवीं त्रिपुरभैरवीम् ।।**
**स्वयंभूहृदयां बाणभ्रूकामाङ्कस्थितेतराम् । प्राप्तप्रत्यक्चितिं वन्दे देवीं त्रिपुरभैरवीम् ।।**
**वर्गान्ते पठितं यत्स्यात्स्तोत्रमेतत्समाहितैः । सर्वान्कामानवाप्नोति अन्ते सायुज्यमाप्नुयात् ।।**

इति स्तुत्वा जपं दव्यै समर्पयेत्।

एवं द्वितीयदिने प्राग्वत् अङ्गविद्याजपान्तं विधाय ४ मूलं **क आई हंसः। क काई हंसः। क खाई हंसः....क क्षाई हंसः।** पर्यन्तम् ३६।। **का आई हंसः। का काई इंसः।...का क्षाई हंसः। ३६।। कि आई हंसः। कि काई हंसः।...कि क्षाई हंसः।।३६।। एवं की कु कू कृ कॄ क्लृ क्लॄ के कै को कौ कं कः।**

एवं षट्त्रिंशद्दिनेषु च प्रागुक्तपरिपाट्या प्रत्यहं १३४६ संख्या यथा भवति तथा जपं कृत्वा वर्गद्वयस्यान्ते स्तोत्रं पठेत्।।

इति नामपारायणविधिः।

## *मन्त्रपारायणविधिः*

**माया कुण्डलिनी क्रिया मधुमती काली कला मालिनी**
**मातङ्गी विजया जया भगवती देवी शिवा शांभवी।**
**शक्तिः शंकरवल्लभा त्रिनयना वाग्वादिनी भैरवी**
**ह्रींकारी त्रिपुरा परापरमयी माता कुमारीत्यसि।।**

माया = ह्रीं; कुण्डलिनी = ऐं; क्रिया = क्लीं; मधुमती = मातृका शुद्धा सबिन्दुका सविसर्गा सबिन्दुविसर्गा चेति चतुर्विधा; कालीत्यादि शांभरीत्यन्तानि दश नामानि। शक्तिः = सौः; शंकरवल्लभा = ह्स्रीं; त्रिनयना = वौषट्; वाग्वादिनी = वद वद वाग्वादिनि स्वाहा; भैरवी = ह्स्रैं ह्स्क्ल्रीं ह्स्रौः; ह्रींकारी = ह्रीं; त्रिपुरा = क-१५; परापरमयी = ह्सौः स्हौः; माता = ह्स्क्ल्ड्रैं ह्स्क्ल्ड्रीं ह्स्क्ल्ड्रौः; कुमारी = ऐं क्लीं सौः।।

एभिः श्रीमूलविद्यायाः श्रीमदाराध्यचरणकृपाप्राप्तो मन्त्रपारायणक्रमः। तत्र कृतप्रातराह्निकक्रियो विविक्ते स्थाने स्वासनमास्तीर्य **ह्रीं आधारशक्तिकमलासनाय नमः** इति तत्संपूज्य, तत्र प्राङ्मुख उपविश्य गुरुगणपतिपरदेवताः प्रणम्य मूलविद्यया प्राणायामत्रयं कृत्वा संक्षेपतो भूतशुद्धिं प्राणप्रतिष्ठां मातृकान्यासं मूलविद्यायाः ऋष्यादिकरषडङ्गन्यासं चतुरासनन्यासं वाग्देवताष्टकन्यासं च कृत्वा देवीं ध्यात्वा मानसैरुपचारैः संपूज्य श्रीपरदेवतात्मकः पारायणजपमारभेत।

## *मन्त्रपारायणम्*

तत्र प्रथमदिने—

| | |
|---|---|
| **ॐ ऐं ह्रीं श्रीं मूलं ह्रीं अ काली सौः** | **ॐ ऐं ह्रीं श्रीं मूलं ह्रीं अः काली सौः** |
| **ॐ ऐं ह्रीं श्रीं मूलं ह्रीं आ काली सौः** | * * * * |
| * * * * | **ॐ ऐं ह्रीं श्रीं मूलं ह्रीं ळः काली सौः** |
| **ॐ ऐं ह्रीं श्रीं मूलं ह्रीं ळ काली सौः** | **ॐ ऐं ह्रीं श्रीं मूलं ह्रीं क्षः काली सौः ५१** |
| **ॐ ऐं ह्रीं श्रीं मूलं ह्रीं क्ष काली सौः ५१** | * * * * |
| **ॐ ऐं ह्रीं श्रीं मूलं ह्रीं अं काली सौः** | **ॐ ऐं ह्रीं श्रीं मूलं ह्रीं अंः काली सौः** |
| **ॐ ऐं ह्रीं श्रीं मूलं ह्रीं आं काली सौः** | **ॐ ऐं ह्रीं श्रीं मूलं ह्रीं आंः काली सौः** |
| **ॐ ऐं ह्रीं श्रीं मूलं ह्रीं ळ काली सौः** | **ॐ ऐं ह्रीं श्रीं मूलं ह्रीं ळंः काली सौः** |
| **ॐ ऐं ह्रीं श्रीं मूलं ह्रीं क्षं काली सौः ५१** | **ॐ ऐं ह्रीं श्रीं मूलं ह्रीं क्षंः काली सौ ५१** |
| **ॐ ऐं ह्रीं श्रीं मूलं ह्रीं अ काली सौः** | **२०४** |

इति मायाबीजेन सह शुद्धादिमातृका-चतुष्टयवर्णैः कालीनाम्ना शक्तिमन्त्रेण च चतुरधि-कद्विशतवारं मूलविद्यां जपेत्।

ॐ ऐं ह्रीं श्रीं मूलं ऐं अ काली सौः

ॐ ऐं ह्रीं श्रीं मूलं ऐं आ काली सौः

* * * *

ॐ ऐं ह्रीं श्रीं मूलं ऐं ळ काली सौः

ॐ ऐं ह्रीं श्रीं मूलं ऐं क्ष काली सौः

ॐ ऐं ह्रीं श्रीं मूलं ऐं अं काली सौः

ॐ ऐं ह्रीं श्रीं मूलं ऐं आं काली सौः

* * * *

ॐ ऐं ह्रीं श्रीं मूलं ऐं ळं काली सौः

ॐ ऐं ह्रीं श्रीं मूलं ऐं क्षं काली सौः ५१

ॐ ऐं ह्रीं श्रीं मूलं ऐं अः काली सौः

ॐ ऐं ह्रीं श्रीं मूलं ऐं आः काली सौः

* * * *

ॐ ऐं ह्रीं श्रीं मूलं ऐं ळः काली सौः

ॐ ऐं ह्रीं श्रीं मूलं ऐं क्षः काली सौः ५१

ॐ ऐं ह्रीं श्रीं मूलं ऐं अंः काली सौः

ॐ ऐं ह्रीं श्रीं मूलं ऐं आंः काली सौः

* * * *

ॐ ऐं ह्रीं श्रीं मूलं ऐं ळंः काली सौः

ॐ ऐं ह्रीं श्रीं मूलं ऐं क्षंः काली सौः ५१

२०४

इति कुण्डलिनीबीजेन सह प्राग्वत् चतुरधिकद्विशतवारं मूलविद्यां जपेत्।

ॐ ऐं ह्रीं श्रीं मूलं क्लीं अ काली सौः

ॐ ऐं ह्रीं श्रीं मूलं क्लीं आ काली सौः

* * * *

ॐ ऐं ह्रीं श्रीं मूलं क्लीं ळ काली सौः

ॐ ऐं ह्रीं श्रीं मूलं ऐं क्ष काली सौः ५१

ॐ ऐं ह्रीं श्रीं मूलं ऐं अं काली सौः

ॐ ऐं ह्रीं श्रीं मूलं ऐं आं काली सौः

* * * *

ॐ ऐं ह्रीं श्रीं मूलं ऐं ळं काली सौः

ॐ ऐं ह्रीं श्रीं मूलं ऐं क्षं काली सौः ५१

ॐ ऐं ह्रीं श्रीं मूलं क्लीं अः काली सौः

ॐ ऐं ह्रीं श्रीं मूलं क्लीं आः काली सौः

* * * *

ॐ ऐं ह्रीं श्रीं मूलं क्लीं ळः काली सौः

ॐ ऐं ह्रीं श्रीं मूलं क्लीं क्षः काली सौः ५१

ॐ ऐं ह्रीं श्रीं मूलं क्लीं अंः काली सौः

ॐ ऐं ह्रीं श्रीं मूलं क्लीं आंः काली सौः

ॐ ऐं ह्रीं श्रीं मूलं क्लीं ळंः काली सौः

ॐ ऐं ह्रीं श्रीं मूलं क्लीं क्षंः काली सौः ५१

२०४

इति क्रियाबीजेन सह पूर्ववत् चतुरधिकद्विशतवारं जपेत्।

एवं कालीनाम्नि द्वादशोत्तरषट्छतसंख्याको जपः ६१२

ॐ ऐं ह्रीं श्रीं मूलं **कला** द्वादशोत्तरषट्छतसंख्याको जपः ६१२

ॐ ऐं ह्रीं श्रीं मूलं **मालिनी** द्वादशोत्तरषट्छतसंख्याको जपः ६१२

ॐ ऐं ह्रीं श्रीं मूलं **मातङ्गी** द्वादशोत्तरषट्छतसंख्याको जपः ६१२

| | | |
|---|---|---|
| ॐ ऐं ह्रीं श्रीं मूलं **विजया** द्वादशोत्तरषट्छतसंख्याको जपः | | ६१२ |
| ॐ ऐं ह्रीं श्रीं मूलं **जया** द्वादशोत्तरषट्छतसंख्याको जपः | | ६१२ |
| ॐ ऐं ह्रीं श्रीं मूलं **भगवती** द्वादशोत्तरषट्छतसंख्याको जपः | | ६१२ |
| ॐ ऐं ह्रीं श्रीं मूलं **देवी** द्वादशोत्तरषट्छतसंख्याको जपः | | ६१२ |
| ॐ ऐं ह्रीं श्रीं मूलं **शिवा** द्वादशोत्तरषट्छतसंख्याको जपः | | ६१२ |
| ॐ ऐं ह्रीं श्रीं मूलं **शांभवी** द्वादशोत्तरषट्छतसंख्याको जपः | | ६१२ |
| आहत्य दशानामपि नाम्नां विंशत्युत्तरैकशताधिकषट्सहस्रं | | ६१२० |
| एवं प्रथमदिनस्य जपसंख्या— | | ६१२० |
| द्वितीयदिने **सौः** इत्यस्य स्थाने | **हस्त्रीं** इति निवेश्य जपेत् | ६१२० |
| तृतीयदिने **सौः** इत्यस्य स्थाने | **वौषट्** इति निवेश्य जपेत् | ६१२० |
| चतुर्थदिने **सौः** इत्यस्य स्थाने | **वद वद वाग्वादिनि स्वाहा** इति निवेश्य जपेत् | ६१२० |
| पञ्चमदिने **सौः** इत्यस्य स्थाने | **हस्त्रैं हस्क्लीं हस्त्रौः** इति निवेश्य जपेत् | ६१२० |
| षष्ठदिने **सौः** इत्यस्य स्थाने | **ह्रीं** इति निवेश्य जपेत् ६१२० | |
| सप्तमदिने **सौः** इत्यस्य स्थाने | **क-१५** इति निवेश्य जपेत् | ६१२० |
| अष्टमदिने **सौः** इत्यस्य स्थाने | **हसौः स्हौः** इति निवेश्य जपेत् | ६१२० |
| नवमदिने **सौः** इत्यस्य स्थाने | **हस्वल्र्डैं हस्क्ल्र्डीं** | |
| | **हस्क्ल्र्डौः** इति निवेश्य जपेत् | ६१२० |
| **दशमदिने सौः** इत्यस्य स्थाने | **ऐं क्लीं सौः** इति निवेश्य जपेत् | ६१२० |
| आहत्य दशानामपि दिनानां जपसंख्या | .... | ६१२०० |

द्विशत्युत्तरैकषष्टिसहस्राणि।

इति मन्त्रपारायणम्।

## ५. लघुआवरणपूजा खण्डः

### *लघुआवरणपूजा*

**ॐ आब्रह्मलोकादाशेषादालोकालोकपर्वतात् ।**

**ये वसन्ति द्विजा देवास्तेभ्यो नित्यं नमाम्यहम् ।।**

**ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो वंशर्षिभ्यो नमो गुरुभ्यः ।**

**सर्वोपल्लवरहितप्रज्ञानघनप्रत्यगर्थो ब्रह्माहमस्मि, सोहमस्मि ब्रह्माहमस्मि ।**

**श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं**

**सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम्।**

**वीरान्द्व्यष्ट चतुष्कषष्टिनवकं वीरावलीपञ्चकं**

**श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम्।।**

**ओं ऐं ह्रीं श्रीं भं भद्रकाल्यै नमः।** (द्वारस्य दक्षशाखायां)

**ॐ ऐं ह्रीं श्रीं भं भैरवाय नमः।** (द्वारस्य वामशाखायां)

**ॐ ऐं ह्रीं श्रीं लं लम्बोदराय नमः।** (द्वारस्य ऊर्ध्वशाखायां) इति द्वारदेवताः संपूज्य।

## *तत्त्वाचमनम्*

**ॐ ऐं ह्रीं श्रीं ऐं कएईलह्रीं आत्मतत्त्वं शोधयामि स्वाहा।**

**ॐ ऐं ह्रीं श्रीं क्लीं हसकहलह्रीं विद्यातत्त्वं शोधयामि स्वाहा।**

**ॐ ऐं ह्रीं श्रीं सौः सकलह्रीं शिवतत्त्वं शोधयामि स्वाहा।**

**ॐ ऐं ह्रीं श्रीं ऐं कएईलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं सर्वतत्त्वं शोधयामि स्वाहा।।** इत्याचम्य

## *श्रीगुरुपादुकामन्त्रम्*

**ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः, हंसः शिवः सोहं, हस्ख्फ्रें हसक्षमलवरयूं हसौः सहक्षमलवरयीं स्हौः हंसः शिवः सोहं स्वरूपनिरूपणहेतवे श्रीगुरवे नमः,** अमुका-**नन्दनाथश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः, सोहं हंसः शिवः हस्ख्फ्रें हसक्षमलवरयूं हसौः सहक्षमलवरयीं स्हौः सोहं हंसः शिवः स्वच्छप्रकाशविमर्शहेतवे श्रीपरमगुरवे नमः,** अमुका-**नन्दनाथ श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः, हंसः शिवः सोहं हंसः हस्ख्फ्रें हसक्षमलवरयूं हसौः सहक्षमलवरयीं स्हौः हंसः शिवः सोहं हंसः स्वात्मारामपञ्जरविलीनतेजसे श्रीपरमेष्ठिगुरवे नमः** अमुका-**नन्दनाथश्रीपादुकां पूजयामि नमः।।**

इति मृगीमुद्रया गुरुपादुकामुच्चार्य, सुमुख-सुवृत्त-चतुरश्र-मुद्गर-योन्याख्याभिः पञ्चभिर्मुद्राभिः श्रीगुरून् वाममुजे प्रणम्य, गणपतिमूलेन स्वदक्षभुजे योनिमुद्रया प्रणमेत्।

**आगमार्थं च देवानां गमनार्थं तु रक्षसाम्।**

**कुर्याद् घण्टारवं तत्र देवताह्वानलाञ्छनम्।।**

इति घण्टानादं कृत्वा।।

**शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्।**
**प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये।।**

मूलेन प्राणानायम्य। देशकालौ संकीर्त्य—

**मम श्रीललितामहात्रिपुरसुन्दरीप्रीत्यर्थं यथासंभवद्रव्यैः**
**यथाशक्ति सपर्याक्रमं निर्वर्तयिष्ये, तेन परमेश्वरं प्रीणयामि।**

आत्मानमलंकृत्य प्रमुदितचित्तः **शिवोऽहं** इति भावयेत्।

आसनमास्तीर्य दक्षिणहस्ते जलमादाय **सौः** इति द्वादशवारमभिमन्त्र्य तज्जलेन मूलमन्त्रेण आसनं प्रोक्षयेत्।

**ॐ ऐं ह्रीं श्रीं ओं ह्रीं आधारशक्तिकमलासनाय नमः।**

इति पुष्पाक्षतैः आसनमभ्यर्च्य आसने उपविशेत्।

**ॐ ऐं ह्रीं श्रीं रक्तद्वादशशक्तियुक्ताय द्वीपनाथाय नमः।** इति भूमौ पुष्पाञ्जलिं विकिरेत्।

**ॐ ऐं ह्रीं श्रीं समस्तप्रकट-गुप्त-गुप्ततर-संप्रदाय-कुलोत्तीर्ण-निगर्भ-रहस्याति-रहस्य-परापरातिरहस्य-योगिनीभ्यो नमः।** इति मूर्ध्नि बद्धाञ्जलिः।

**ॐ ऐं ह्रीं श्रीं ऐं हः अस्त्राय फट्**—इति अस्त्रमन्त्रेण मुहुरावृत्तेन अङ्गुष्ठादि कनिष्ठिकान्तं करतलयोः कूर्परयोः देहे च व्यापकं कुर्यात्।

## *अनुज्ञाम्*

**ॐ ऐं ह्रीं श्रीं श्रीगुरो दक्षिणामूर्ते भक्तानुग्रहकारक। अनुज्ञां देहि भगवन् श्रीचक्रयजनाय मे।** इत्यनुज्ञाप्य

## *लघु प्राणप्रतिष्ठा*

**ॐ ऐं ह्रीं श्रीं ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं ॐ हंसः सोहं, सोहं हंसः शिवः, श्रीचक्रस्य प्राणा इह प्राणाः।**

**ॐ ऐं ह्रीं श्रीं ॐ आं ह्रीं क्रों श्रीचक्रस्य जीव इह स्थितः। सर्वेन्द्रियाणि वाङ्मनश्चक्षुः श्रोत्रजिह्वाघ्राणा इहैवागत्य अस्मिन् चक्रे सुखं चिरं तिष्ठन्तु स्वाहा।**

**ॐ ऐं ह्रीं श्रीं ॐ असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम्। ज्योक्पश्येम सूर्यमुच्चरन्तमनुमते मृळया नस्स्वस्ति।**

इति लघुप्राणप्रतिष्ठा।

**मनुः— ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः, लं ब्रह्मवीरावली, वं विष्णुवीरावली, रं रुद्रवीरावली, यं ईश्वरवीरावली, हं सदाशिववीरावली।।** पूर्ववत् पञ्चपूजादि कर्तव्यम्

## ३९. नवदूतीमन्त्रः

अस्य मन्त्रस्य। मन्मथ ऋषिः गायत्रीछन्दः। नवदूती देवता। अं बीजम्। आं शक्तिः। सौः कीलकम्। अं, आं, सौः इति द्विवारेण न्यासः।

ध्यानम्—

**दूतयस्तु यथा सर्वा वरदाभयहस्तकाः।**
**योनिमुद्रां च सव्ये तु पानपात्रं च दक्षिणे।**
**ध्येया हि सर्वकार्यार्थे नवयोन्यो यथाक्रमम्।।**

**मनुः— १. ॐ अं आं सौः ह्रीं श्रीं सौः योन्यंबादूति श्री। २. ॐ योनिसिद्ध नायांबादूतीश्री। ३. ॐ महायोन्यंबादूतीश्री। ४. ॐ महायोनिसिद्धनाथांबाश्री। ५. ॐ दिव्ययोन्यंबादूतीश्री। ६. ॐ दिव्ययोनिसिद्धनाथांबाश्री। ७. ॐ शंखयोन्यम्बा। ८. ॐ पद्मयोन्यम्बाश्री। ९. ॐ पद्म-योनिसिद्धनाथांबाश्री।। —** पूर्ववत् पञ्चपूजादिकर्तव्यम्

## ४०. वीरावली दशकमन्त्राः

अस्य वीरावलीदशकमहामन्त्रस्य। परमानन्द भैरव ऋषिः। गायत्री छन्दः दशवीरावलीदेवता। ॐ बीजम्। ह्रीं शक्तिः हं कीलकं। फां इत्यादि न्यासः।

ध्यानम्—

**भद्राः खेटधरावीराः वरदाभयहस्तकाः।**
**ध्येयास्सदामहारौद्राः सर्वे विघ्ननिवारकाः।।**

**मनुः १.ॐ ह्रीं श्रीं फट् फां फीं सृष्टिवीरभैरवाय नमः। २. ॐ वीरभैरवाय नमः। ३. ॐ संहारभैरवाय नमः। ४. ॐ रक्तभैरवाय नमः। ५. ॐ यमभैरवाय नमः। ६. ॐ मृत्युवीरभैरवाय नमः। ७. ॐ भद्रवीरभैरवायनमः। ८. ॐ परमार्कवीरभैरवायनमः। ९. मार्ताण्डवीरभैरवायनमः। १०. ॐ कालाग्निरुद्रवीरभैरवायनमः।**

**ॐ इति दशावीरा।।** पूर्ववत् पञ्चपूजादि कर्तव्यम्।

## ४१. देवीमहापादुकामन्त्राः

अस्य मन्त्रस्य। दक्षिणामूर्तिर्ऋषिः। गायत्री छन्दः। आदिशिवानन्दनाथपराभट्टारिकाम्बादेवता। ऐं क्लीं सौः बीजम्। हंसः शिवः सोहं शक्तिः। श्री ह्रीं क्लीं ऐं सौः कीलकम्। महाषोडशीविद्यामूलेन न्यासः।

ध्यानम्—

**शिंजन्नूपुरपादकंकणमहामुद्रासु लाक्षारसा-**
**लंकारांकितपादपंकजयुगं श्रीपादुकालंकृतम्।**
**उद्भास्वन्नखचंद्रशंखंरुचिरं राजज्जपासन्निभं,**
**ब्रह्मादित्रिदशासुरार्चितमहं मूर्ध्निस्मराम्यंबिके ।।**

**मनुः ॐ ऐं ह्रीं श्रीं। ऐं क्लीं सौः हंसः शिवस्सोहं श्रीं ५ ॐ ३ क ५ ह ६ स ४ सौः ६, ह्सौः हसक्षमलवरयऊं, स्हौः सहक्षमलवरयईं, औं रहक्षमलवरयऊं सौः आदि शिवानन्दनाथ पराभट्टारिकांबा, ह्रीं श्रीं ॐ हंसः शिवः ह्सौ सोहमस्मि श्रह्महमस्मि अहमिस्म अहं ब्रह्मा स्मि सोऽहं स्वब्रह्म प्रकाशपरिपूर्णाय परिपूर्णाः।** पूर्ववत् पञ्चपूजादि कर्तव्यम्।

## ४२. देवीपादुकामन्त्राः

**(१) ॐ क ५ ह ६ स ४। (२) ॐ एईल ह्रीं, ह ६, स ४। (३) ॐ ईलह्रीं ह ६ हलह्रीं स ४। (४) ॐ ह ६ स ४।। (५) ॐ सकूहलह्रीं स ४। (६) ॐ कहलह्रीं स४। (७) ॐ हलह्रीं स ४। (८) ॐ लह्रीं, स ४। (९) ॐ ह्रीं स ४। (१०) ॐ स ४। (११) ॐ फलह्रीं। (१२) ॐ ४ लह्रीं। (१३) ॐ ह्रीं। (१४) ॐ ह्रीं नमः।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ४३. महापराचरणमन्त्राः

**ॐ ऐं ह्रीं श्रीं ॐ ऐं ह्रीं श्रीं सः ह्रीं सौः हंसः प्रकाशचरणाभ्यां नमः।**
**ॐ ऐं ह्रीं श्रीं ॐ ऐं ह्रीं श्रीं अः ह्रीं सौः सोहं विमर्शचरणाभ्यां नमः।**
**ॐ ऐं ह्रीं श्रीं ॐ ऐं ह्रीं श्रीं सौः ह्रीं हंस सोहं आनन्दचरणाभ्यां नमः।**
**ॐ ऐं ह्रीं श्रीं ॐ ऐं ह्रीं श्रीं सौः ह्रीं हंसः शिवसोहं ज्योतिष्पादचरणाभ्यां नमः।**
**ॐ ऐं ह्रीं श्रीं ॐ ऐं ह्रीं श्रीं सः ह्रीं ह्स्रौः सत्प्रकाशचरणारविंदाभ्यां नमः।**

**ॐ ऐं ह्रीं श्रीं ॐ ऐं ह्रीं श्रीं सः ह्रीं स्हौः विमर्शचरणारविदाभ्यां नमः।**

**ॐ ऐं ह्रीं श्रीं ॐ ऐं ह्रीं श्रीं सः ह्रीं हसौः स्हौः प्रकाशविमर्शविंदाभ्यां नमः।**

**ॐ ऐं ह्रीं श्रीं ॐ ऐं ह्रीं श्रीं सः ह्रीं सौः सौः अहं हंस शिवः सोहं ज्योतिष्पादचरणाभ्यां नमः।**

**ॐ ऐं ह्रीं श्रीं ॐ ऐं ह्रीं श्री सः ह्रीं सौः सौः आनंदचरणाभ्यां नमः।**

**ॐ ऐं ह्रीं श्रीं ॐ ऐं ह्रीं श्रीं सः ह्रीं सौः सः हः सौः परांबाचरणाभ्यां नमः।**

**ॐ ऐं ह्रीं श्रीं सः ह सौः सौः ॐ ह्रीं हुं फट् परांबाचरणाभ्यां नमः।**

**ॐ ऐं ह्रीं श्रीं सः हः सौः सौः अघोरे ह्रीं सः परमघोरे ह्रूं परमघोरे ह्रूं छोररूपेह्रीं, घोरमुखी भीम भीषणमषि रम, पिबहेररुद्र ॐ ह्रीं फट् परांबाचरणारविन्दाभ्यां नमः।**

**ॐ ऐं ह्रीं श्रीं सः हः सौः ॐ ह्रीं हसौः नमः शिवाय हसौः स्हौः सौः ह्रीं ह्रूं फट् श्रीमातृकानंदचरणारविन्दाभ्यां नमः।**

## ४४. रक्तशुक्लचरणद्वयमन्त्राः

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं हंस शिवः सोहं श्रीं ह्रीं क्लीं ऐं सौः ॐ ३ क ५ ह ६ स ४ सौं ५ हसकलह्रीं हसकहलह्रीं स ४ हसौः हसक्षमलवरयऊं, हसक्षमलवरयी, औं रहक्षमलवरभऊं, सौः आदि शिवानंदनाथ पराभट्टरिकांबा।**

**ॐ ऐं ह्रीं श्रीं ह्रीं श्रीं ॐ हंसः शिवः हसौं योहमस्मि ब्रह्माहस्मि अहमस्मि ब्रह्माहमस्मि सोहं स्वच्छ प्रकाशपरिपूर्ण परापरमहाप्रकाशपरिपूर्णानंदनाथश्री।**

## ४५. भुवनेश्वरीमन्त्रः

अस्य मन्त्रस्य। सदाशिव ऋषिः। पंक्तिः छन्दः। भुवनेश्वरी देवता। हं बीजं। ह्रीं शक्तिः इं कीलकं ह्रीं ह्रीं इत्यादि न्यासः ध्यानम्—

**उद्यद्धास्वत्समाभां विजितनवजपामिन्दुखण्डावतंसां**

**ज्योतिर्मौलीं त्रिनेत्रां विविधमणिलसत्कुंडलालंकृतांगीम्।**

**हारग्रैवेयकांजीगुणमणिवलयाद्यैर्विचित्रांबराढ्या—**

**मम्बां पाशांकुशाढ्यामभयवरकरामंबिकां तां नमामि।।**

**ॐ श्रीं ह्रीं क्लीं ॐ नमो भगवति भुनेश्वरि सर्वलोकवशंकरि स्वाहा।।**

**मनुः— ॐ श्रीं ह्रीं ईंनमः, ह्रीं श्रीं ॐ।** पूर्ववत् पञ्चपूजादि कर्तव्यम्।

## ४६. स्वगुरुपादुकामन्त्रः

अस्य मन्त्रस्य। ब्रह्मा ऋषिः गायत्री छन्दः। श्रीगुरुपादुका देवता। ॐ हं बीजं। सः शक्तिः सोहं कीलकं। हंसां इत्यादिन्यासः।

ध्यानम्—

**वन्दे गुरुपदद्वंद्वमवाङ्मानसगोचरम्।**

**रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महत्।।**

**ब्रह्मरंध्रेसितांबुजे चिच्चन्द्रमण्डले शुद्धस्फटिकाभं विराजितं मुद्रया विलसत्पाणिद्वयनासावलियुतं दधानं रत्तथाशत्तयलिष्टवामांक संस्थया धारय।।**

**मनुः ॐ ऐं ह्रीं श्रीं ऐं क्लींसौः हंसः शिवः सोहं स्वरूपनिरूपणहेतवे अमुकः नमः स्वगुरुश्री।।** पूर्ववत् पञ्चपूजादि कर्तव्यम्।

## ४७. परमगुरुमन्त्रः

**अस्य मन्त्रस्य। सदाशिव ऋषिः। गायत्रीछन्दः। परमगुरुर्देवता। हं बीजं। सं शक्तिः सोहं कीलकं हंसां इत्यादि न्यासः।**

ध्यानम्—

**आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजबोधयुक्तं।**

**योगींद्रमीड्यं भवरोगवेद्यं श्रीमद्गुरुं नित्यमहं नमामि।।**

**मूलं। ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सोहं हंसः शिवः स्वच्छप्रकाशहेतवे अमुकः नमः परमगुरुश्री।।** पूर्ववत् पञ्चपूजादि कर्तव्यम्।

## ४८. परमेष्ठिगुरुमन्त्रः

अस्य मन्त्रस्य। दक्षिणामूर्त्तिर्ऋषिः। गायत्री छन्दः। परमेष्ठिगुरुर्देवता। हं बीजं। सं शक्तिः। सोहं कीलकं। हंसां इत्यादिन्यासः।

ध्यानम्—

**अन्तस्तिमिरनिर्भेदभानवे कामधेनवे।**

**सदन्तवासिनां कल्पतरवे गुरवे नमः।।**

**मूलं ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हंसः शिवः सोहं स्वात्माराम परमानन्द पंजर विलीन तेजसे अमुक श्री परमेष्ठिगुरु श्री।। अमुक नमः।** पूर्ववत् पञ्चपूजादि कर्तव्यम्

## ४९. परापरगुरुमन्त्रः

अस्य मन्त्रस्य। ब्रह्मा ऋषिः। गायत्रीछन्दः। परमेष्ठिगुरुर्देवता। हं बीजं सं शक्तिः। सोहं कीलकं। हंसां इत्यादिन्यासः।

ध्यानम्—

**नित्यं निर्मलमद्वयं निरुपमं निर्धूतदुःखाखिलं,**
**निःसंदेहकरं निवृत्तिसुलभं निर्मत्सरं निस्पृहम्।**
**भव्यं भव्यजनैकसेव्यममलं भावादिकं भासुरं,**
**ब्रह्मानन्दमहं भजामि सकलोपाधिप्रणाशं मुदा ।।**

**लोकमाया समायुक्तं योगिनंपरिवेष्टितं। वन्दे मन्दस्मितानन्द श्री गुरु शिवशक्ति विग्रहम्।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः। हंसः शिवः सोहं हंसः स्वात्मा अमुकः नमः परापरगुरु श्री।।** पूर्ववत् पञ्चपूजादि कर्तव्यम्।

## ५०. लक्ष्मीवासुदेवमन्त्रः

अस्य मन्त्रस्य। प्रजापतिर्ऋषिः। गायत्री छन्दः। श्रीवासुदेवो देवता। ह्रीं बीजं। श्रीं शक्तिः श्रीलक्ष्मीवासुदेवायेति कीलकम्।

१ ॐ ह्रीं ह्रीं, २ ॐ श्रीं श्रीं, ३ ॐ लक्ष्मी, ४ ॐ वासुदेवाय, ५ ॐ नमः इति करतलनेत्रकरन्यासः।

ध्यानम्—

**विद्युच्चन्द्रनिभं वपुः कमलजा वैकुंठयोरेकदा प्राप्तं स्नेहवसेन रत्नविलसद्भूषारसालंकृताम्।**

**मनुः ॐ ह्रीं ह्रीं श्रीं श्रीं लक्ष्मीवासुदेवाय नमः। विद्यापङ्कज दर्पणान्मणिमयं कुम्भं सरोजं गदा शख चक्रमयूणि बिभ्रदमितां दृश्याच्य यावस्सदा** पूर्वक पञ्चपूजादि कर्तव्यम्

## ५१. श्रीसुदर्शनमन्त्रः (षडक्षरि, मालामन्त्रं च)

**१. ॐ सहस्त्रार हुं फट्। श्री ह्रीं ॐ सुदर्शनचक्राय रिपुचित्तं भ्रामय भ्रामय स्वाहा।**

**२. अस्य मन्त्रस्य। अहिर्बुध्न्यो भगवान् ऋषिः। अत्यनुष्टुप् छंदः। सुदर्शनमहाविष्णुर्देवता आचक्राय बीजं। धीचक्राय शक्तिः। ज्वालाचक्राय कीलकम्।**

**३. ॐ व्रः क्रः फट् हुं फट् कालचक्राय स्वाहा (१२ अक्षर मनुः लक्ष्मीतन्त्रः)**

आचक्राय, विचक्राय, सुचक्राय, संचक्राय, धीचक्राय, ज्वालाचक्राय इति न्यासः।।

ध्यानम्—

**कल्पांतार्कप्रकाशं त्रिभुवनमखिलं तेजसा पूरयन्तं**
**रक्ताक्षं पिंगकेशं रिपुकुलभयदं भीमदंष्ट्राट्टहासं।**
**शंखं चक्रं गदाब्जं पृथुतरमुसलं चापबाणांकुंशादीन्**
**बिभ्राणं दोर्भिराद्यं मनसि सुररिपुं भावये चक्रराजम्।।** पंचपूजा।

## *मालामन्त्रः*

**ॐ क्लीं कृष्णाय गोविन्दाय, गोपीजन वल्लभाय पराय परमपुरुषाय, परमात्मने परकर्म-मन्त्रयन्त्रौषधास्त्रशस्त्राणि संहर संहर मृत्योर्मोचय मोचय ॐ नमो भगवते महासुदर्शनायदीप्त्रे ज्वाला परीताय सर्वदिक्क्षोभण कराय हुं भट् ब्रह्मणे परं ज्योतिषे स्वाहा।** पूर्ववत् पञ्चपूजादि कर्तव्यम्।

## *५२. आम्नायमन्दारे सुदर्शनमन्त्रः*

अस्य मन्त्रस्य। अहिर्बुध्न्यो भगवान् ऋषिः। अनुष्टुप् छन्दः। श्रीसुदशनरूपीश्रीमहाविष्णुर्देवता ॐ बीजं। हुं शक्तिः। फट् कीलकम्।

ॐ स्त्रं आचक्राय स्वाहा। हं विचक्राय स्वाहा। स्त्रां सुचक्राय स्वाहा। रं धीचक्राय स्वाहा। संचक्राय स्वाहा। फट् ज्वालाचक्राय स्वाहा। इति न्यासः।

**व्याप्ति व्याप्तांतरिक्षं क्षरदरूणनिभा वासिताशांतरालं**
**दंष्ट्रा निष्ठयूतवह्निप्रविरलशबलादभ्रशुभ्राट्टहासं**
**शंखारि श्रीगदांभोरुहमुसलधनुः पाशदीप्तांकुशाढ्यं**
**दोर्भिः पिंगाक्षवेषं प्रणमति शिरसा विष्णुचक्राधिराजम्।।**
मनुः। **ॐ क्षभ्र्यों सहस्त्रार हुं फट्।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्

## *५३. द्विचत्वारिंशदक्षरो हयग्रीवमन्त्रः*

१ ॐ हंसः सोऽहं, २ ॐ विश्ववातीर्णस्वरूपाय, ३ ॐ चिन्मयानन्दरूपिणे। ४ ॐ तुभ्यं नमो हयग्रीव, ५ ॐ विद्याराजाय विष्णवे, ६ ॐ स्वाहा हंसः सोऽहं।

अस्य मन्त्रस्य ब्रह्मा ऋषिः। अनुष्टुपछंदः। हयग्रीवो देवता। संख्याक्रमेण अङ्गन्यासः।।

ध्यानम्—

**शरच्छशांकप्रभमश्ववक्त्रं, मुक्तामयैर्हारगणैरुपेतं ।**

**रथांगशंखांचितबाहुयुग्मं, जानुद्वयन्यस्तकरं भजामः ।।**पंचपूजा।।

## ५४. सूर्यमन्त्रः

**ॐ ह्रीं घृणिः सूर्य आदित्य श्रीं।।**

**मं मंडूकादि......नमः।**

**नवपीठ शक्तीः।। रां दीप्तायै, रीं सूक्ष्मायै, रूं जयायै, रैं भद्रायै, वैं विभूत्यै वों विमलायै, वौ अघोराधै, रं विद्युतायै, मध्ये रः सर्वतोमुख्यै ब्रह्मविष्णु शिवात्मकाय सौराय योगपीठाय नमः इति।**

**षट्कोणेषु षडंगदेवताः। अष्टदलेषु प्राच्यादि चतुर्दिक्षु,**

**ॐ आदित्याय, ॐ यं रवये, ॐ उं भानवे, ॐ इं भास्कराय। आग्नेयादि विदिक्षु।**

**ॐ उं ऊषायै, ॐ प्रं प्रज्ञायै, ॐ प्रभायै, ॐ संध्यायै।।**

**अष्टदलाग्रेषु।। ब्राह्म्यादि अष्टमातृकाः।। तासां पुरतः। षट्कोणे शिखा, नेत्रयोर्मध्ये, कोणष्वंतराले अरुणाय इति पूजयेत्।**

**भूपुराभ्यन्तरे पूर्वादि। चन्द्राय, मंगल, बुध, बृहस्पति, शुक्र, शनैश्चर, राहु, केतु।**

**भूपुरे इन्द्रादि दशदिक्पालान्। ततः तेषां आयुधानि च पूजयेत्।।**

## ५५-५६. श्रीविद्या पंचदशी, सौभाग्यपंचदशी मन्त्रः

**ॐ कएईलह्रीं हसकलह्रीं, सकलह्रीं।। ॐ ऐंकएईलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं।।**

अस्य मन्त्रस्य। आनन्दभैरव ऋषिः। पंक्तिछन्दः श्रीललितात्रिपुरसुन्दरी देवता। क ५ स ४ शक्तिः। ह ६ कीलकं।

कूटत्रयं, द्विवारोच्चाटणं, करन्यासं, हृदयादिन्यासः।

ध्यानम्—

**सकुंकुमबिलेपनामलिकचुंबिकस्तूरिकां। समन्दहसितेक्षणा सशरचापपाशांकुशाम् ।**

**अशेषजनमोहिनींमरुणमाल्यभूषांबरां, जपाकुसुमभासुरांजपविधौ स्मरेदंबिकाम् ।।**पंचपूजा।।

सौभाग्यपंचदशीमन्त्रे, सबालाबीजाक्षरेण पञ्चदशीकूटेन न्यासः।।

(३ ऐं ह्रीं श्रीं) इति त्रितारि बीजाणि, जपन्यासादिकाले योजनीयम्।।

मन्त्रोद्धारं—

**वेधोबीजमधोऽध्यर्णमधो जिष्णुतमः परा।** (श्रीदेवी रहस्ये)

**छविः शक्तिः शिरः कान्तिस्तमो माया शरत् शिरः।**

**तमो मायाञ्चले देव्या मन्त्रः पञ्चदशाक्षरः।**

### ५७. श्रीविद्यातन्त्रः । षोडशीमन्त्रः

**१. ॐ श्रीं ह्रीं क्लीं ऐं सौः ॐ ह्रीं श्रीं, क ५ ह ६ स ४ सौः क्लीं ह्रीं श्रीं।**

**२. ॐ ह्रीं क ५ ह ६ स ४।**

**३. ॐ क ५ ह ६ स ३ श्रीं।**

**प्रथम मन्त्रस्य। श्री दक्षिणामूर्तिर्ऋषिः पंक्तिः छन्दः। श्रीललिता त्रिपुरसुन्दरी देवता।**

**द्वितीय-तृतीय-मन्त्रयोः। आनन्दभैरव ऋषिः देवीगायत्री छन्दः। श्रीललिता त्रिपुरसुन्दरी देवता ऐं बीजं। सौः शक्तिः क्लीं कीलकं। श्रीललिता.....जपे विनियोगः।**

**ततः कर शुद्धि न्यासं। ॐ ह्रीं श्रीं आं। ॐ ह्रीं श्रीं आं। ॐ ह्रीं श्रीं सौः।** इति प्रत्येकं मन्त्रेण, मध्यमादारभ्य, करतलांतं कुर्यात्। ततः आसन न्यासः।

**ॐ ह्रीं श्रीं ह्रीं क्लीं सौः देव्यासनाय नमः पादयोः। ह्री श्रीं है ह्रक्लीं हसौः चक्रासनायनमः जंघयोः। ॐ ह्रीं श्रीं ह्सौं हस्क्लीं ह्सौः सर्वमन्त्रासनाय नमः जानुनोः।**

**ॐ ह्रीं श्रीं ह्रीं क्लीं ब्लें साध्यसिद्धासनाय नमः लिंगे।। ततः षडंगन्यासः।।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलं (षट्कूटं) श्रीमहात्रिपुरसुन्दरी ह्री ऐं सर्वज्ञशक्तिधाम्ने ह्रां मध्यमाभ्यां नमः।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलं श्रीमहात्रिपुरसुन्दरि ह्रीं क्लीं नित्यतृप्तिशक्तिधाम्ने ह्रीं अनामिकाभ्यां स्वाहा।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलं श्रीमहात्रिपुरसुन्दरि ह्रीं सौः अनाधिबोधशक्तिधाम्ने ह्रूं कनिष्ठिकाभ्यां वषट्।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलं श्रीमहात्रिपुरसुन्दरि ह्रीं सौः स्वतन्त्रशक्तिधाम्ने हैं अंगुष्ठाभ्यां हुं।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलं श्रीमहात्रिपुरसुन्दरि ह्रीं नित्यमलुप्तशक्तिधाम्ने ह्रौं तर्जनीभ्यां वौषट्।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलं श्रीमहात्रिपुरसुन्दरि ह्रीं ऐं नित्यमनंतशक्तिधाम्ने हः करतलकरपृष्ठाभ्यां फट्।**

ध्यानम्—

**सकुंकुमविलेपनामलिकचुंबिकस्तूरिकां, समंदहसितेक्षणां सशरचापपाशांकुशाम्।**
**अशेषजनमोहिनीं अरुणमाल्यभूषांबरां, जपाकुसुमभास्वरां जपविधौ स्मरेदंबिकाम्।।**
**श्रीचापं चेक्षुमयं प्रसूनविशिखान् पाशांकुशौ पुस्तकं, माणिक्याक्षसरोरुहं मणिमयीं वीणां सोरजद्वयं।**
**पाणिभ्यामभयं वरं च दधतीं ब्रह्मादिसेव्यां परां, सिन्दूरारुणविग्रहां त्रिनयनां तां षोडशीमाश्रये।।**

एवं हृदयादि क्रमेण कुर्यात्।

**ॐ ऐं ह्रीं श्रीं त्रिपुरसुन्दर्यै नमः लं पृथिव्यात्मिकायै गंधं समर्पयामि।।**

इत्येवं पंचपूजां कृत्वा, अन्य न्यासांश्च कृत्वा, आवरणपूजां समर्प्य, पुनश्चरणं कुर्यात्।। अष्टाविंशो लक्षजपः। प्रतिलक्षजपं कृत्वा हवनम्।।

मन्त्रोद्धारः

**लक्ष्मीः परा मदनवाग्भवशक्तियुक्ता, तारं च भूतिकमले कथितापि विद्या ।**
**शक्त्यादिकं तु विपरीततया च प्रोक्तं श्रीषोडशाक्षरविधिः शिवमस्तु पूर्णम् ।।**

## ५८. *श्रीविद्या-पराषोडशाक्षरी-मन्त्रः*

अस्य मन्त्रस्य। नारायण ऋषिः। गायत्रीछन्दः। पराश्रीर्देवता। श्री बीजं। ह्रीं शक्तिः। क्लीं कीलकं। श्रीसर्वज्ञशक्तिधाम्ने ह्रां। श्रीं......ह्रीं इत्यादि न्यासः।

ध्यानम्—

**तार्क्ष्यरूढहरिहृत्सरोजके भाति या परमचित्स्वरूपिणी ।**
**पद्मयुग्ममणिपात्रधारिणी भासतां हृदि सदा ममांबिका ।।**
**मनुः। श्रीं सौः क्लीं ऐं ह्रीं ॐ ह्रीं श्रीं, स ४ ह ६ क ५ ह्रीं ऐं क्लीं सौः श्रीं।।**

मन्त्रोद्धारः

**लक्ष्मीपरा मदनवाग्भव शक्तियुक्ता ।**
**तारं च भूतिकमले कथिता च विद्या ।।**
**शक्त्यादिकं तु विपरीततया प्रयुक्तं ।**
**श्रीषोडशार्णमिदमागमसुप्रसिद्धम् ।।**

**कथिता च विद्येति। श्रीविद्यायाः सोमसूर्यानलात्मकक्रमेण खण्डत्रितयम्।**

**तत्र सादिखंडः सोमात्मकः। हादिखण्डः सूर्यात्मकः। कादिखण्डो वह्न्यात्मकः।।**

## ३. पञ्चपंचिका जपा खण्डः

### *५९. पंचलक्ष्म्यंबा (१) लक्ष्मीलक्ष्म्यंबामन्त्रः*

भृगुर्ऋषिः। नियुद्गायत्री छन्दः। श्रीलक्ष्मीलक्ष्म्यंबादेवता। शकारो बीजम् ईकारश्शक्तिः। रेकारः कीलकम्। श्रां इत्यादि न्यासः।

**नमाम्यहं श्रियं रम्यां सर्वदेवनमस्कृताम्। तप्तकार्तस्वराभासां दिव्यरत्नविभूषिताम्।।**
**रत्नौघमूर्धमुकुटां शुद्धक्षौमांगरागिणीम्। पद्माक्षीं पद्मनाभेन हृदिचिंत्यां कृपामयीम् ।।**

**मनुः।।श्रीं।।** पूर्ववत् पञ्चपूजादि कर्तव्यम्।

### *६०. (२) महालक्ष्मीलक्ष्म्यंबा-मन्त्रः*

प्रजापतिर्ऋषिः। गायत्री छन्दः। श्रीमहालक्ष्मीलक्ष्म्यंबादेवता। श्रीं बीजं ह्रीं शक्तिः। कीलकं। श्रीं इत्यादि न्यासः।

**चतुर्भुजां स्फुरद्रत्ननूपुरां मुकुटोज्वलाम्। ग्रैवेयांगदहाराढ्यां कंकतीरत्नकुंडलाम् ।।**
**पद्मासनसमासीनां दूतीभिर्मण्डितां सदा। शुक्लांगरागवसनां ध्यायेद्दिव्यांगनानताम्।।**

मनुः ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः।।

पूर्ववत् पञ्चपूजादिकर्तव्यम्

### *६१. (३) त्रिशक्तिलक्ष्म्यंबा-मन्त्रः*

ब्रह्मा ऋषिः। गायत्री छन्दः। श्रीत्रिशक्तिलक्ष्म्यंबा देवता। श्रीं बीजम्। ह्रीं शक्तिः। क्लीं कीलकम्। यद्विरावृत्या न्यासः।

ध्यानम्—

**कमलासनशोभाढ्यां रत्नमंजीररंजिताम् । स्फुरद्रत्नलसन्मौलिं रत्नकुंडलमण्डिताम्।।**
**अनंतरत्नस्फुटितं नानाभरणभूषिताम् । दधतीं पद्मयुगलं पाशांकुशधनुश्शिरान्।।**
**षड्भुजामिंदुवदनां दूतीभिः परिवारिताम् । तप्तकार्तस्वराभासां त्रिशक्तिं भावयाम्यहम्।।**

**मनुः। श्रीं ह्रीं क्लीं।।** पूर्ववत् कर्तव्यम् पञ्चपूजादि।

## ६२. *साम्राज्यलक्ष्म्यंबा-मन्त्रः*

विष्णुर्ऋषिः। गायत्री छन्दः। श्रीसाम्राज्यलक्ष्म्यंबा देवता। सहकलह्रीं बीजम्। श्रीं शक्तिः। कीलकम्। आं ईं इत्यादि न्यासः।

ध्यानम्—

**अतसीपुष्पसंकाशां रत्नभूषणभूषिताम् । शंखचक्रगदापद्मशाङ्र्गबाणधरां करैः ।।**
**सर्वांगसुन्दरीं देवीं वरदाभयशोभिताम्। ध्यायेदष्टभुजां लक्ष्मीं सर्वसाम्राज्यदेवतातम् ।।**

**मनुः श्रीं सहकलह्रीं श्रीं।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ६३. *पंचकल्पलतांबा ।। पंचकामेशीकल्पलतांबा मन्त्रः*

संमोहन ऋषिः। गायत्रीछन्दः। श्रीपंचकामेश्वरीकल्पलतांबा देवता। क्लीं बीजम्। ह्रीं शक्तिः। ऐं कीलकम्। श्रीं। ऐं। ब्लूं स्त्रीं। समन्त्रेन च। न्यासः।

**रक्तां रक्तदुकूलांगलेपनां रक्तभूषिताम् । पाशांकुशधनुर्बाणान् पुस्तकं चाक्षमालिकाम् ।।**
**वरा भीतीश्च दधतीं त्रैलोक्यवशकारिणीं। ध्यायेद्देवीं पंचकामनायकां विश्वमातरम् ।।**

**मनुः श्रीं क्लीं ऐं ब्लूं स्त्रीं।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ६४. *पारिजातेश्वरी-कल्पलतांबा-मन्त्रः*

दक्षिणामूर्तिर्ऋषिः। गायत्रीछन्दः। श्रीपारिजातेश्वरी देवता। हसकलह्रीं बीजम्। ह्रीं शक्तिः। ॐ कीलकम्। आं इत्यादि न्यासः।

**हंसारूढालसन्मुक्तां धवलां शुभ्रवाससम्। शुचिस्मितां चन्द्रमौलिं वज्रमुक्ताविभूषिताम्।।**
**विद्यां वीणां सुधाकुंभमक्षमालां च बिभ्रतीम् । पारिजातेश्वरीं देवीं ध्यायेत्सारस्वतप्रदाम्।।**

**मनुः ॐ ह्रीं हसकलह्रीं ॐ सरस्वत्यै नमः।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ६५. कुमारी-कल्पलतांबा-मन्त्रः

दक्षिणामूर्तिर्ऋषिः। पंक्ति-छन्दः। श्रीकुमारीकल्पलतांबा देवता। ऐं बीजम्। सौः शक्तिः।। अं ओं कीलकम्। बीजत्रयद्विरावृत्या न्यासः।

**उद्यत्सूर्यसहस्राभां माणिक्यवरभूषणाम्। स्फुरद्रत्नविह्वलास्यां नानालंकारभूषिताम्।।**
**इक्षुकोदण्डबाणांश्च पुस्तकं चाक्षमालिकाम्। दधतीं चिन्तयेद्बालां सर्वराजवशंकरीम्।।**

**मनुः ऐं क्लीं सौः।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ६६. पंचबाणेशीकल्पलतांबा-मन्त्रः

मदन ऋषिः। गायत्री छन्दः। श्रीपंचबाणेशीकल्पलतांबा देवता। **द्रां** बीजं। **सः** शक्तिः। **ब्लूं** कीलकम्। मूलमन्त्र पंचबीजेन समस्तेन च न्यासः।

**उद्यद्दिवाकराभासां नानालंकारभूषिताम्। बन्धूककुसुमाकाररक्तवस्त्रांगरागिणीम् ।।**
**इक्षुकोदण्डपुष्पेषु विराजितभुजद्वयाम्। ध्यायेद्देवीं महेशानीं पंचबाणेश्वरीं शिवाम् ।।**
**मनुः द्रां द्रीं क्लीं ब्लूं सः।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ६७. (पंच पंचिकायां) पंचकोशांबा।। परंज्योतिकोशांबा मन्त्रः

श्रीपरंज्योतिकोशांबा महामन्त्रस्य। ब्रह्मा ऋषिः। गायत्रीछन्दः। **श्री परंज्योतिर्मयांबा देवता।** हुं बीजम्। **सः** शक्तिः। **सोऽहं** कीलकम्। १ **स्वाहा।** २ **सोहं।** ३ **हंसः।** ४ **ह्रीं।** ५ **ओं।** ६ समस्तमन्त्रेण। न्यासः।

ध्यानम्—

**प्रणवाच्चित्कलारूपां मायया व्याप्तिरूपिणीम्। हंसपादेन देवेशीं साक्षादात्मस्वरूपिणीम्।।**
**तत्रत्या विन्दुत्रितयात्सृष्टिस्थितिलयात्मिकाम् । श्रीदेवीं दर्पणाकारां वन्दे ज्योतिर्मयां पराम्।।**
**मनुः। ॐ ह्रीं हंसस्सोहं स्वाहा।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्

## ६८. परानिष्कलकोशांबा-मन्त्रः

ब्रह्मा ऋषिः। **गायत्री** छन्दः। **ब्रह्मा देवता। अकारो** बीजम्। **उकारः** शक्तिः। **मकारः** कीलकम् **अं ओं आं। इं ओं** ईं। **उ ओं** ऊं। एं **ओं** ऐं। ओं **औं अं।** अं **ओं अः।** इति न्यासः।।

**परनिष्फलदेवीं तां परब्रह्मस्वरूपिणीम् । शुक्लांबरपरीधानां शुक्लमाल्यानुलेपनाम् ।।**
**ज्ञानमुद्रांकितां सिद्धैस्संसेवितपदांबुजाम् । ज्ञानानंदमयां वन्दे परनिष्कलदेवताम् ।।**
**मनुः।।ॐ।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ६९. *अजपाकोशांबा-मन्त्रः*

हंसः ऋषिः। अव्यक्तगायत्री छन्दः। हंसोदेवता। हं बीजं सः शक्तिः। सोहं कीलकम्।

ॐ हंसां सूर्यात्मने। ॐ हंसीं सोमात्मने। ॐ हंसूं निरंजनात्मने। ॐ हंसैं निराभासात्मने। ॐ हंसौं अतनुसूक्ष्मप्रबोधात्मने। ॐ हंस अव्यक्तप्रबोधात्मने। इति न्यासः।

ध्यानम्—

**शिवशक्तिपदद्वंद्वकालाग्निपार्श्वयुग्मकः । अहं परमहंसस्तु सर्वव्यापी प्रकाशवान् ।।**
**सूर्यकोटिप्रतीकाशः स्वप्रकाशेन भासते । संहाररूपहंसोऽयं स्वरूपं दर्शयत्यपि ।।**
**मनुः हंसः।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ७०. *मातृकाकोशांबा-मन्त्रः*

**ब्रह्मा** ऋषिः। **गायत्री** छन्दः। **श्रीमातृककोशांबा** देवता। **हलो** बीजानि। **स्वराश्शक्तयः। बिदवः** कीलकं।। **अं कं..ङं आं। इं चं..ञं ईं। उं टं..णं ऊं। एं तं..नं ऐं। ॐ पं..मं औं। अं यं..क्षं अः।** इति न्यासः।

**ध्यायेद्वर्णस्वरूपाढ्यां महादेवीं स्वराननाम्। कचवर्गकरां रंम्यां चतुवर्गपदांबुजां।।**
**पवर्गचारुपार्श्वांगलसच्छातोदरीं पराम् । यशवर्गांगशुभगां पीनोन्नतघनस्तनीम्।।**
**नितंबिनीं च गहनां शुक्लाक्षीं क्षाममध्यगाम् । मुक्तामाल्यांगरागांगीमक्षस्रक्कुंभशोभिताम्।।**
**चिंतालिखितसत्पाणीं समग्रवरदायिनीम् । सुप्रसन्नां शशिमुखीं मातृकां लोकमातरम्।।**
**मनुः अं आं...कं क्षं।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ७१. *पंचकामदुघाम्बा-अमृतपीठेश्वरी-मन्त्रः*

शुक्र ऋषिः। गायत्री छन्दः। श्रीअमृतपीठेश्वरी कामदुघांबा देवता। ह्रीं बीजम्। स्वाहा शक्तिः। हूंसः कीलकम्। १ ह्रों हंसः। २ संजीवनि। ३ जूँ जीवं। ४ प्राणग्रंथिस्थं। ५ कुरु कुरु। ६ सः स्वाहा। इति न्यासः।

**कर्पूराभां स्फुरन्मुक्ताभूषणैर्भूषितां पराम् । ज्ञानमुद्रामक्षमालां दधतीं परमेश्वरीम् ।।**

**इच्छाज्ञानक्रियारूपां सर्वकामफलप्रदाम् । अमृतेशीं परां वन्दे शांतवक्त्रसुलोचनाम् ।।**

**मनुः। ॐ ह्रीं हंसः संजीविनि जूं जीवं प्राणग्रंथिस्थं कुरु कुरु सः स्वाहा।।**

## *७२. सुधाश्री-कामदुधांबा-मन्त्रः*

**अरिसत ऋषिः। गायत्री छन्दः। श्रीसुधाश्री कामदुघांवा देवता। ऐं वदवद वाग्वादिनि। ऐं बीजं। ॐ मोक्षं कुरु कुरु हौं ॐ शक्तिः। ॐ क्लीं क्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु कुरु क्लौं कीलकम्।** कूटत्रय-द्विरावत्या न्यासः।

**संजीवनीं महादेवीं कदंबवनमध्यगाम् । पुस्तकं वामहस्तेन दक्षिणेनाक्षमालिकाम् ।।**

**बिभ्रतीं कुंदधवलां कुमारीं परदेवताम्। कामदुधां सुधादेवीं चिंतयामि परां शिवाम् ।।**

**मनुः। ऐं वद वद वाग्वादिनि ऐं। क्लीं क्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु कुरु क्लीं। ॐ मोक्षं कुरु कुरु हौं ॐ।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## *७३. अमृतेश्वरी-कामदुधांबा*

ऋषि-ध्यानादीनामभावः

ऐं ब्लूं झ्रौं जूँ सः इत्युक्त्वा अमृते अमृतोद्भवे। अमृतेश्वरि अमृतवर्षिणीति पदं वदेत्।।

**अमृतं श्रावय युगं स्वाहांतो मनुरुच्यते। अमृतेशीमनुः प्रोक्तः पंचत्रिंशद्भिरक्षरैः।।**

**मनुः। ऐं ब्लूं झ्रौं जूँसः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय २ स्वाहा।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## *७४. अन्नपूर्णाकामदुधांबा-मन्त्रः*

ब्रह्मा ऋषिः। त्रिष्टुप्छन्दः। अन्नपूर्णेश्वरी कामदुधांबा देवता। ह्रीं बीजम्। श्रीं शक्तिः। कीलकम्। ह्रां इत्यादि न्यासः।

**तप्तकांचनसंकाशां बालेन्दुकृतशेखराम् । नवरत्नप्रभादीप्तमुकुटां कुंकुमारुणां।**

**चित्रवस्त्रपरीधानां मीनाक्षीं कमलस्तनीम् । नृत्यंतीमीशमनिशं दृष्ट्वाऽऽनंदमयां शिवाम्।**

**सानंदमुखलोलाक्षीं मेखलाढ्यनितबिनीम्। नित्यान्नदाननिरतां भूमिश्रीभ्यां नमस्कृताम्।।**

**दुग्धान्नभरितं पात्रं सरत्नं वामहस्तके । दक्षिणे तु करे देव्या संविंध्यायेत्सुवर्णभाम्।।**

**मनुः। ॐ ह्रीं श्रीं क्लीं भगवति माहेश्वरि अन्नपूर्णे स्वाहा।।** पूर्ववत् पञ्चपूजादि कर्तव्यम्।

## ७५. पञ्चरत्नांबा।। सिद्धलक्ष्मीरत्नांबा-मन्त्रः

**ब्रह्मा ऋषिः।** गायत्री छन्दः। **श्रीसिद्धलक्ष्मीरत्नांबा देवता। ह्रीं बीजम्।** **क्रों** शक्तिः। **क्लीं** कीलकम् **१ ॐ ह्रीं ह्रीं ह्रीं। २ ॐ ह्रीं क्लीं ह्रीं। ३ ॐ ह्रीं क्रों ह्रीं। ४ ॐ ह्रीं क्लिन्ने ह्रीं। ५ ॐ ह्रीं नित्यमद ह्रीं। ६ ॐ ह्रीं द्रवे ह्रीं** इति न्यासः।

**रक्तां रक्तांबरां रक्तगंधमाल्यविभूषिताम् । चतुर्भुजां त्रिनयनां माणिक्यमुकुटोज्वलाम्।**

**सिंहासने सुखासीनां स्मेरवक्त्रसरोरुहाम् । सिद्धलक्ष्मीमहं वन्दे करुणामृतसागराम्।।**

**मनुः ह्रीं क्लीं क्लिन्ने क्रों नित्यमदद्रवे ह्रीं।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ७६. मातंगी-मन्त्रः

मतंग ऋषिः। गायत्री छन्दः। मातंगीश्वरी देवता। क्लीं बीजम्। ऐं शक्तिः। सौं कीलकम्। ऐं सौः इति द्विरावृत्तिभ्यां न्यासः।

**मनुः। ऐं ह्रीं श्रीं ऐं क्लीं सौः। ॐ नमो भगवति श्रीराजमातंगीश्वरि सर्वजनमनोहारिणि सर्वम् रंजिनि क्लीं ह्रीं श्रीं सर्वराजवशंकरि सर्वस्त्रीपुरुषवशंकरि सर्वदुष्टमृगवशंकरि सर्ववसत्वशंकरि सर्वलोकवशंकरि अभीष्टं मे देहि सर्वजनं मे वशमानय स्वाहा। सौः क्लीः ऐं श्रीं ह्रीं ऐं।।**—पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ७७. भुवनेश्वरी-रत्नांबा-मन्त्रः

भुवनेश्वरी-मन्त्रभागे द्रष्टव्यं।

**मनुः ॐ श्रीं ह्रीं श्रीं।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ७८. वाराहीरत्नांबा-मन्त्रः

शिवऋषिः। गायत्री छन्दः। वाराही देवता। ग्लौं बीजम्। स्वाहा शक्तिः। मूलेन संख्याक्रमेण न्यासः

ध्यानं- वाराही मन्त्रसंदर्भे द्रष्टव्यम्।।

**मनुः।। १ ऐं ग्लौं ऐं ॐ नमो भगवति वार्तालि वार्तालि, २ वाराही वाराही, ३ वराहमुखि वराहमुखि, ४ ऐं ग्लौं ऐं अन्धे अंधिनि नमः। ५ रुधे रुधिनि नमः। ६ जंभेजंभिनि नमः। मोहे मोहिनि नमः। स्तंभे स्तंभिनि नमः। ७ ऐं ग्लौं ऐं सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक्चित्तचक्षुर्मुखगतिजिह्वस्तंभनं कुरु कुरु शीघ्रं वश्यं कुरु कुरु ऐं ग्लौं ऐं लौं ऐं ठः ठः ठः हुं फट् स्वाहा।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## *तिथिनित्या-मण्डलम्*

**अथ कामेश्वरी नित्या नित्या च भगमालिनी।। नित्यक्लिन्नाभिधानित्या भेरुंडा वह्निवासिनी।।**
**महाविद्येश्वरी दूती त्वरिता कुलसुन्दरी। नित्या नीलपताका च विजया सर्वमंगला।**
**ज्वालामालिनिका चित्रेत्येताः पंचदशोदिताः। कामेश्वर्यादिका नित्या विचित्रांताः प्रकीर्तिताः।।**

तिथि-नित्या-प्रकरणे सविस्तारं जप-विधानं दत्तमस्ति।

## ४. श्रीतिथिनित्या-जपा-खण्डः

### *७९. कामेश्वरीनित्या-मन्त्रः*

अस्य मन्त्रस्य। **संमोहन** ऋषिः। **गायत्री** छन्दः। **श्रीकामेश्वरी देवता। क्लीं बीजम्। सौः** शक्तिः। **ऐं** कीलकम्।। १ **ऐं क्ली सौः**। २ **नमः कामेश्वरि**। ३ **इच्छाकामफलप्रदे**। ४ **सर्वसत्ववशंकरि**। ५ **सर्वजगत्क्षोभकरि**। ६ **सौः क्लीं ऐं**। इति मूलेन न्यासः।

ध्यानम्:—

**देवीं ध्यायेज्जगद्धात्रीं जपाकुसुमसन्निभाम्। बालभानु-प्रतीकाशां शातकुंभसमप्रभाम्।।**
**रक्तवस्त्रपरीधानां संपत्विद्यावशंकरीद्। नमामि वरदां देवीं कामेशीमभयप्रदाम्।।**

**मनुः ३ ऐं क्लीं सौः नमः कामेश्वरि...सर्वजगत्क्षोभकरि हुं हुं द्रां द्रीं क्लीं ब्लूं सः सौः क्लीं ऐं।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

### *८०. भगमालिनी-मन्त्रः*

अस्य मन्त्रस्य। मदन ऋषिः। त्रिष्टुपछन्दः। श्रीभगमालिनी देवता। ऐं बीजम्। ह्रीं शक्तिः। ब्लूं कीलकम्। ब्लां इत्यादि न्यासः।

ध्यानम्—

**भगरूपां भगमयां दुकूलवसनां शिवां। सर्वालंकारसंयुक्तां सर्वलोकवशंकरीम्।।**
**भगोदरीं महादेवीं रक्तोत्पलसमप्रभां। कामेश्वरांकनिलयां वन्दे श्रीभगमालिनीम्।।**

**मनुः। ऐं भगभुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोने भगनिपतिनि सर्वभगवशंकरि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वभगानि मे वशमानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय सर्वशत्रून् भगेश्वरि अमोघे भगविच्चे क्षुभक्षोभय सर्वसत्वान्**

**भगेश्वरि ऐं ब्लूं जं ब्लूं छें ब्लूं मों ब्लूं हें ब्लूं क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हुं ब्लुं ह्रीं।।**
पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ८१. नित्यक्लिन्ना-मन्त्रः

ब्रह्मा ऋषिः। विराट् छन्दः। नित्यक्लिन्ना देवता। ह्रीं बीजम्। स्वाहा शक्तिः। क्लीं कीलकम्। ह्रां इत्यादि न्यासः।

**पद्मरागमणिप्रख्यां हेमताटंकभूषिताम्। रक्तवस्त्रधरां देवीं रक्तमाल्यानुलेपनाम्।।**
**अंजनांचितनेत्रांतां पद्मपत्रनिभेक्षणाम्। नित्यक्लिन्नां नमस्यामि चतुर्भुजविराजिताम्।।**
**मनुः। ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ८२. भेरुण्डा-मन्त्रः

महाविष्णु ऋषिः। गायत्रीछन्दः। श्रीभेरुंडा नित्या देवता। भ्रों बीजम्। स्वाहा शक्तिः। क्रों कीलकम्। भ्रां इत्यादि न्यासः।

**शुद्धस्फटिकसंकाशा पद्मपत्रसमप्रभाम्। मध्याह्नादित्यसंकाशां शुभ्रवस्त्रसमन्विताम्।**
**श्वेतचन्दनलिप्तांगीं शुभ्रमाल्यविभूषिताम्। बिभ्रतीं चिंन्मयां मुद्रामक्षमालां च पुस्तकम्।**
**सहस्त्रपत्रकमले समासीनां शुचिस्मिताम्। सर्वविद्याप्रदां देवीं भेरुंडां प्रणमाम्यहम्।।**

**मनुः— क्रों भ्रों कौं झ्रौं ध्रौं ज्रौं स्वाहा।**
पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ८३. वह्निवासिनी-मन्त्रः

**मनुः ॐ क्रों भ्रों क्रों झ्रौं छ्रौं ज्रौं स्वाहा।**
वसिष्ठ ऋषिः। गायत्री छन्दः श्रीवह्निवासिनीनित्या देवता। ह्रीं बीजम्। नमः शक्तिः। ॐ कीलकम्। ह्रां इत्यादि न्यासः।

ध्यानम्:—

**वह्निकोटिप्रतीकाशां सूर्यकोटिसमप्रभाम्। अग्निज्वालासमाकीर्णां सर्वरोगोपहारिणीम्।।**
**कालमृत्युप्रशमनीमपमृत्युनिवारिणीम्। परमायुष्यदां वन्दे नित्यां श्रीवह्निवासिनीम्।।**
**मनुः ॐ ह्रीं वह्निवासिन्यै नमः।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ८४. महाविद्येश्वरी-मन्त्रः

ब्रह्मा ऋषि:। गायत्रीछन्द:। श्रीमहाविद्येश्वरीनित्या देवता। ॐ बीजम्। फ्रें शक्ति:। ह्रीं कीलकम्। ॐ ह्रीं। फ्रेंस: नित्यक्लिन्ने। मदद्रवे स्वाहा इति न्यास:।

**तप्तकांचनसंकाशां कनकाभरणान्विताम्। हेमताटंकसंयुक्तां कस्तूरी-तिलकान्विताम्।**
**हेमचिंताकसंयुक्तां पूर्णचन्द्रमुखांबुजाम्। पीतांबरसमोपेतां पुष्पमाल्यविभूषिताम्।**
**मुक्ताहारसमोपेतां मुकुटेन विराजिताम्। महाविद्येश्वरीं वन्दे सर्वैश्वर्यफलप्रदाम्।।**
**मनुः ॐ ह्रीं फ्रेंसः नित्यक्लिन्ने मदद्रवे स्वाहा।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ८५. शिवदूती-मन्त्रः

**ईश्वर** ऋषि:। **गायत्री** छन्द:। **श्रीशिवदूतीनित्या** देवता। **ह्रीं** बीजम्। **नमः** शक्ति: **शिवदूत्यै** कीलकम् **ह्रां** इत्यादि न्यास:।

**बालसूर्यप्रतीकाशां बन्धूकप्रसवारुणाम्। विधिविष्णुशिवस्तुत्यां देवगंधर्वसेविताम्।।**
**रक्तारविंदसंकाशां सर्वाभरणभूषिताम्। शिवदूतीं नमस्यामि रत्नसिंहासनस्थिताम्।।**
**मनुः ह्रीं शिवदूत्यै नमः।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ८६. त्वरिता-मन्त्रः

**ईश्व** ऋषि:। **विराट्** छन्द:। **श्रीत्वरितानित्या देवता। हुं** बीजं **स्त्रीं** शक्ति:। **ह्रीं** कीलकं **ह्रां** इत्यादि न्यास:।

**रक्तारविंदसंकाशामुद्यत्सूर्यसमप्रभाम्। दधतीमंकुशं पाशं बाणान् चापं मनोहरम्।।**
**चतुर्भुजां महादेवीमप्सरोगणसंकुलाम्। नमामि त्वरितां नित्यां भक्तानामभयप्रदम्।।**
**मनुः ॐ ह्रीं हूं केचच्छेक्षः स्त्रीं हूं क्षें ह्रीं फट्।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ८७. कुलसुन्दरी मन्त्रः

दक्षिणामूर्तिर्ऋषि:। **पंक्ति** छन्द:। **श्रीकुलसुन्दरी देवता। ऐं** बीजम्। **सौः** शक्ति: **क्लीं** कीलकम्। **मूलेन द्विरावृत्या न्यासः। ध्यानं। अरुणकिरण...कल्याणशीला।। मनुः ऐं क्लौं सौः।।**

## ८८. नित्या-नित्या

**जामदग्नि-राम ऋषिः। पंक्तिः छन्दः। श्रीनित्या नित्यादेवता। ऐं बीजम्। सौः शक्तिः। स कीलकम्।।**

अनुलोम-विलोम-खण्डत्रयेण न्यासः।

ध्यानम्—

**उद्यत्प्रद्योतननिभां जपाकुसुमसन्निभाम्। हरिचन्दनलिप्तांगीं रक्तमाल्यविभूषिताम्।**

**रत्नाभरणभूषांगीं रक्तवस्त्रसुशोभिताम्। जगदंबां नमस्यामि नित्यां श्रीपरमेश्वरीम्।।**

**मनुः, ऐं क्लीं सौः ह्सवलरडैं हसकलरडीं हसकलर डौं सौः क्लीं ऐं। द्रां द्रीं क्लीं ब्लूं सः।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ८९. नीलपताका-नित्यमदद्रवा-मन्त्रः

परमशिव ऋषिः। जगती छन्दः। श्रीनीलपताकानित्या देवता। ह्रीं बीजम्। फ्रें उक्तिः स्त्रूं कीलकम्। १ ॐ ह्रीं। २ ॐ फ्रें स्त्रूं। ३ ॐ आं ह्रीं क्रों। ४ ॐ नित्यमदद्रवे। ५ ॐ हुं। ६ ॐ क्रो। इति न्यासः।

**पंचवक्त्रां त्रिनयनामरुणांशुकधारिणी। दशहस्तां लसन्मुक्ता-प्रायाभरणमंडिताम्।।**

**नीलमेघसमप्रख्यां धूम्रार्चिसदृशप्रभाम्। नीलपुष्पस्त्रजोपेतां ध्यायेन्नीलपताकिनीम्।।**

**मनुः। ॐ ह्रीं फ्रें स्त्रूं आं ह्रीं क्रों नित्यमदद्रवे हुं क्रों।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ९०. विजया-नित्यामन्त्रः

**दक्षिणामूर्तिर्ऋषिः। पंक्तिः** छन्दः। **श्रीविजयानित्या** देवता। **ह्लां** बीजम्। **ह्लीं** शक्तिः। **ह्लूं** कीलकम् **ह्लां** इत्यादि न्यासः।

**उद्यदर्कसमप्रभां दाडिमीपुष्पसन्निभाम्। रक्तकंकणकेयूरकिरीटांगदसंयुताम्।।**

**देवगंधर्वयोगीशमुनिसिद्धनिषेविताम्। नमामि विजयां नित्यां सिंहोपरिकृतासनाम्।।**

**मनुः।।भ्म्रौं।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## ९१. सर्वमंगला-मन्त्रः

**चन्द्र** ऋषिः। **गायत्री** छन्द। **श्रीसर्वमंगलानित्या** देवता। **स्त्रौं** बीज। **नमः** शक्तिः। **सर्वमंगलायै** इति कीलकं। **मूल-भागत्रयेण** न्यासः।

**रक्तोत्पलसमप्रख्यां पद्मपत्रनिभेक्षणाम्। इक्षुकार्मुकपुष्पौघपाशांकुशसमन्विताम् ।।**
**सुप्रसन्नां शशिमुखीं नानारत्नविभूषिताम्। शुभ्रपद्मासनस्थांतां भजामि सर्वमंगलाम्।।**
**मनुः स्व्रौं सर्वमंगलायै नमः।।**

## *१२. ज्वालामालिनी-मन्त्रः*

**कश्यप** ऋषिः। **गायत्री** छन्दः। **श्रीज्वालामालिनीनित्या देवता।** **रं** बीजम्। **फट्** शक्तिः। **हुं** कीलकम्। १ **ॐ नमो भगवति ज्वालामालिनि।** २ **ॐ देवदेवि सर्वभूतसंहारकारिके।** ३ **ॐ जातवेदसि। ज्वलअतिज्वाल** ४।५ **ॐ प्रज्वल २ हुं हुं।** ६ **ॐ रं रं हुं फट्।** इति न्यासः।

ध्यानम्—

**अग्निज्वाला समाभाक्षीं नीलवक्त्रां चतुर्भुजाम्। नीलनीरदसंकाशां नीलकेशीं तनूदरीम्।**
**खड्गं त्रिशूलं बिभ्राणां वरांसाभयमेव च । सिंहपृष्ठसमारूढां ध्यायेज्ज्वालाद्यमालिनीम्।।**

**मनुः। ॐ नमो भगवति ज्वालामालिनि देवदेवि सर्वभूतसंहारकारिके जाववेदसि ज्वलातिज्वल ज्वलतिज्वल प्रज्वल २ हुं हुं रं रं हुं फट्।। पूर्ववत् पञ्चपूजादिकर्तव्यम्।**

## *१३. विचित्रानित्या-मन्त्रः*

ब्रह्मा ऋषिः। गायत्री छन्दः। श्रीविचित्रानित्या देवता ककारो बीजम्। औकारः शक्तिः। चकारः कीलकम्। चां इत्यादि न्यासः।

ध्यानम्—

**शुद्धस्फटिकसंकाशां पलाशकुसुमप्रभाम्। नीलमेघप्रतीकाशां चतुर्हस्तां त्रिलोचनाम् ।।**
**सर्वालंकारसंयुक्तां पुष्पबाणेक्षुचापिनीम्। पाशांकुशसमोपेतां ध्यायेच्चित्रां महेश्वरीम्।।**
**मनुः च्क्रौं।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## **पीठत्रय-मन्त्राः**

## *१४. कामगिरिपीठ-मन्त्राः*

अस्य मन्त्रस्य। ब्रह्मा ऋषिः। गायत्रीछन्दः। ब्रह्माणी देवता। ऐं बीजम्। अं शक्तिः। क्लीं कीलकम्। ह्रां इत्यादि न्यासः। ध्यानम्।

**ब्रह्मात्मशक्तिसहितमरुणं कामसंज्ञिकम्। गिरिपीठमहं वन्दे सर्वसिद्धिप्रदायकम्।।**

**मनुः। ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अं आं सौः ब्रह्मात्मशक्ति-सरस्वत्यै नमः।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## १५. पूर्णगिरिपीठ-मन्त्रः

अस्य मन्त्रस्य। विष्णुर्ऋषिः। अनुष्टुप्छन्दः। नारायणीदेवता। क्लीं बीजम्। ह्रीं शक्तिः। नमः कीलकं। श्रां इत्यादि न्यासः। ध्यानम्।

**लक्ष्मीं क्षीरसमुद्रराजतनयां..मुकुन्दप्रियाम्।।**

**मनुः। ऐं क्लीं सौः पूर्णगिरिपीठ-विष्णवात्मशक्त्यै नमः।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## १६. जालंधरपीठमन्त्रः

अस्य मन्त्रस्य। रुद्रऋषिः। अतिजगती छन्दः। श्रीगौरी देवता। सौः बीजम्। ऐं शक्तिः। ह्रीं कीलकम्। बालया न्यासः। ध्यानम्।

**आधारे तरुणार्कबिंवरन चिरे वाग्वीजमग्नि प्रभा।**

**बीजं मन्मयभिन्द्र गोपकनिम, हृदपंकजं संस्थितम्।**

**रंध्रं व्रह्मपदे च शाक्तपरं हेम प्रभा भासुरम्।**

**यं ध्यायन्ति पदत्रयं शिवे ते यांति सौख्यं पदम्।।**

**मनुः ऐं क्लीं सौः श्रीं ह्रीं ऐं जालंधरपीठ-रुद्रात्म-शक्तिगौर्यै नमः** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## १७. वीरावली-पंचक-मन्त्रः

अस्य मन्त्रस्य। ब्रह्म-विष्णुरुद्रेश्वर-सदाशिवा ऋषयः। गायत्री छन्दः। श्रीमहापंच-वीरावली। लं बं रं यं हं बीजानि। सरस्वती महालक्ष्मी गौर्युन्मनी मनोन्मनीः शक्तयः। सोहं कीलकम्। ऐं ह्रीं श्रीं ऐं क्लीं सौः इति न्यासः। ध्यानम्।

**ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः।**

**चतुर्भुजाश्च ध्यातव्यस्तत्तदायुधसंयुताः।।**

**मनुः-ऐं ह्रीं श्रीं ऐं क्लीं सौः।। लं ब्रह्म वीरावलि। वं विष्णु। रं रुद्र, यं ईश्वर, हं सदाशिव वीरावली।।**

## १८. अश्वारुढा-मन्त्रः

अस्य मन्त्रस्य। **स्वच्छानन्द-भैरव** ऋषिः। **गायत्री** छन्दः। **अश्वारूढांबा** देवता।

**आं** बीजम्। **ह्रीं शक्तिः**। **क्लीं** कीलकम्। १ **आं**। २ **ह्रीं**। ३ **क्रों**। ४ **एह्येहि**। ५ **परफेवरि**
६ **स्वाहा**। **न्यासः**।

**अश्वारूढा कराग्रे नवकनकमया वेत्रयष्टी दधाना,**
**दक्षीणेनानयन्तीस्फुरिततनुलता पाशबद्धान् स्वसाद्यान्।**
**देवी नित्यप्रसन्ना शशिशकलधरा सा त्रिनेत्राभिरामा,**
**दद्यादाद्यानवद्या सकल-सुखवर-प्राप्ति-हृद्यांश्रियं नः।।**
**मनुः आं ह्रीं क्रों एह्येहि परमेश्वरि स्वाहा।।** पूर्ववत् पञ्चपूजादिकर्तव्यम्।

## गायत्री के अक्षरों की चैतन्य-शक्तियाँ और उनके कार्य

शास्त्रों में गायत्रीमन्त्र-गत चौबीस देव और उनकी चैतन्य शक्तियाँ तथा उनके कार्यों का उल्लेख पाया जाता है, जो क्रमशः निम्नलिखित हैं—

| गायत्री-वर्ण | देवता | शक्ति | कार्य |
|---|---|---|---|
| १- **तत्** | गणेश | सफलता | विघ्नहरण, बुद्धिवृद्धि। |
| २- **स** | नरसिंह | पराक्रम | पुरुषार्थ, पराक्रम, वीरता, शत्रुनाश, आतंक,, आक्रमणसे रक्षा |
| ३- **वि** | विष्णु | पालन | प्राणियोंका पालन, आश्रित-रक्षा। |
| ४- **तुः** | शिव | निश्चलता | आत्मपरायणता, मुक्तिदान, अनासक्ति, आत्मनिष्ठा। |
| ५- **व** | श्रीकृष्ण | योग | क्रियाशीलता, कर्मयोग, सौन्दर्य, सरलता। |
| ६- **रे** | राधा | प्रेम | प्रेम-दृष्टि, द्वेषसमाप्ति। |
| ७- **णि** | लक्ष्मी | धन | धन, पद, यश और योग्य पदार्थकी प्राप्ति। |
| ८- **यं** | अग्नि | तेज | उष्णता, प्रकाश, सामर्थ्यवृद्धि, तेजस्विता। |
| ९- **भ** | इन्द्र | रक्षा | भूत-प्रेतादि अनिष्टाक्रमणोंसे रक्षा, शत्रु-चोरसे रक्षा। |
| १०- **र्गो** | सरस्वती | बुद्धि | मेदावृद्धि, बुद्धिपावित्र्य, चातुर्य, दूरदर्शिता, विवेकशीलता। |
| ११- **दे** | दुर्गा | दमन | विघ्नोंपर विजय, दुष्टदमन, शत्रुसंहरण। |

| गायत्री-वर्ण | देवता | शक्ति | कार्य |
|---|---|---|---|
| १२- व | हनुमान् | निष्ठा | कर्तव्यपरायणता, निर्भयता, ब्रह्मचर्य-निष्ठा। |
| १३- स्य | पृथिवी | गम्भीरता | क्षमाशीलता, भारवहन-क्षमता, सहिष्णुता। |
| १४- धी | सूर्य | प्राण | प्रकाश, आरोग्य-वृद्धि। |
| १५- म | श्रीराम | मर्यादा | तितिक्षा, अविचलता, मर्यादापालन, मैत्री। |
| १६- हि | श्रीसीता | तप | निर्विकारता, पवित्रता, शील, मधुरता। |
| १७- धि | चन्द्र | शान्ति | क्षोभ, उद्विग्नतादिका शमन, प्रसाद। |
| १८- यो | यम | काळ | मृत्युसे निर्भयता, समय-सदुपयोग, स्फूर्ति, जागरूकता। |
| १९- यो | ब्रह्मा | उत्पादन | उत्पादनवृद्धि, संतानवृद्धि। |
| २०- नः | वरुण | ईश | भावुकता, आर्द्रता, माधुर्य। |
| २१- प्र | नारायण | आदर्श | महत्त्वाकाक्षा-वृद्धि, दिव्यगुणस्वभाव-लाभ, उज्ज्वल चरित्र। |
| २२- चो | हयग्रीव | साहस | उत्साह, वीरता, निर्भयता, विपदाओंसे जूझनेकी वृत्ति। |
| २३- द | हंस | विवेक | उज्ज्वल कीर्ति, आत्मतुष्टि, दूरदर्शिता, सत्संगति। |
| २४- यात् | तुलसी | सेवा | सत्यनिष्ठा, पातिक्त्यनिष्ठा, आत्मशान्ति, परकष्ट-निवारण। |

इति श्रीकाञ्ची उपनिषद् ब्रह्मेन्द्र मठाधीश श्रीइष्ठसिद्धेन्द्र सरस्वती यति शिष्य श्रीकृष्णानन्देन्द्र सरस्वती यति शिष्य श्रीपूणानन्देन्द्र सरस्वती यति शिष्य श्रीज्ञानानन्देन्द्रसरस्वतीयति विरचिते

श्री विद्यामहार्णवें जपा प्रकरणम्

समाप्तम्।।

"Parirakhniya Parivedika paramarthika"

# SRI VIDYA MAHARNAWAHA

## KALPATARU

*(Special Super Deluxe Illustrated Edition)*

Volume -1




SRI BHOOMAMBA
SRI GUHANANDA NATHA LAHARI